सुप्राज्यफलमूलानि पुष्पितानि वनानि च ।
प्रशान्तमृगयूथानि शान्तपक्षिगणानि च ॥ १३
फुल्लपङ्कजषण्डानि प्रसन्नसलिलानि च ।
कारण्डवविकीर्णानि तटाकानि सरांसि च ॥ १४
द्रक्ष्यसे दृष्टिरम्याणि गिरिप्रस्रवणानि च ।
रमणीयान्यरण्यानि मयूराभिरुतानि च ॥ १५
गम्यतां वत्स सौमित्रे भवानपि च गच्छतु ।
आगन्तव्यं च ते दृष्ट्वा पुनरेवाश्रमं मम ॥ १६
एवमुक्तस्तथेत्युक्त्वा काकुत्स्थः सहलक्ष्मणः ।
प्रदक्षिणं मुनिं कृत्वा प्रस्थातुमुपचक्रमे ॥ १७
ततः शुभतरे तूणी धनुषी चायतेक्षणा ।
ददौ सीता तयोर्भ्रात्रोः खड्गौ च विमलौ ततः ॥ १८
आबध्य च शुभे तूणी चापे चादाय सस्वने ।
निष्क्रान्तावाश्रमाद्गन्तुमुभौ तौ रामलक्ष्मणौ ॥ १९

G. 3. 9. 19
B. 3. 8. 19
L. 3. 12. 19

इति श्रीरामायणे अरण्यकाण्डे सप्तमः सर्गः ॥ ७ ॥

---

**13** $^{a}$) Ś1 Ñ1 V1 B Dg1 D1.5.7 T3 सं( B1 अ; B2.4 सु )प्राप्य-( B3 °प- ); D3 G1 सुप्राइय-; T1.2 सप्राज्य- ( for सुप्राज्य- ). Ñ2 V B D5.7 -पुष्पाणि ( for -मूलानि ). —$^{b}$) Ñ2 V1 B D7 विचित्राणि ( for पुष्पितानि ). V2 D5 प्रसन्नसलिलानि च. —D5 om. ( hapl. ) 13$^{cd}$. —$^{c}$) Dg1 Dt1 Dm1 D8 T3 M2.3 प्रशस्त- ( for °शान्त- ). D2 -पूज्यानि ( for -यूथानि ). Ñ1 प्रसन्नफलमूलानि. —$^{d}$) V1 D3 M1 क्षांत-; B2 कांत-; B3 ( *sup. lin.* also कांत- ) क्रांत-; B4( marg. also क्षांत- ) क्लांत- ( for शान्त- ). —After 13, Ś1 D2 ins. :

112* फलमूलावनम्राणि वृक्षाणि विविधानि च ।

**14** V2 B1 D2.5 om.( hapl. ) 14$^{ab}$. —B3 reads 14$^{ab}$ in marg. G3 damaged from 14$^{a}$ up to प्रसन्न in 14$^{b}$. —$^{a}$) Ñ1 illeg.; B2 स्वर्ण-; B4( marg. also ) पूर्ण-; Dt1 फल-; D1 घन- ( for फुल्ल- ). V1 Dt1 Dm1 D1.3.8 -खंडानि. —$^{b}$) Ś1 Ñ1 D1 पुष्पितानि वनानि च ( = 13$^{b}$ ). —B2 om. ( hapl. ? ) 14$^{cd}$. —$^{c}$) Ñ V1 B3.4 D3.7 -विघुष्टानि; B1 -विसृष्टानि; D5 -विघुष्टानि; Ck -[ अ ]ति° ( for -विकीर्णानि ). —Ñ1 illeg. for 14$^{d}$. —$^{d}$) Ś1 V1 ( by corr. ) B1-3.4 D1-3.5.7 तडागानि.

**15** V om. ( hapl. ? ) 15$^{ab}$. —Dg1 reads 15$^{ab}$ in marg. —$^{a}$) Ñ2 B D3.5.7 पश्य त्वं; G2 Cr दृश्यसे ( for द्रक्ष्यसे ). —$^{b}$) B1.4 D1.2.5 -प्रश्रवणानि. D3 निर्झराणि शुभानि च. —$^{c}$) B2 वन्यानि ( for [ अ ]रण्यानि ). —$^{d}$) Ñ2 V1 B D5.7 -विरुतानि ( for -[ अ ]भिरुतानि ).

**16** B2 om. 16$^{ab}$. —$^{ab}$) Ñ1 पश्यतो गच्छ सौमित्रे ( for $^{a}$ ). T2 गच्छ तं ( for °तु ). Ś1 D1 भगवानपि गच्छतु ( for $^{b}$ ). Ñ2 V B3.4 D5.7 शिवाय गम्यतां राम सौमित्रे वत्स गम्यतां. —$^{c}$) Dm1 D8 G3 तु ( for च ). Ś1 Ñ1 V B D1-3.5.7 च ( B1 तु ) नो द्रष्टुं; D4 T1.2 G1.2 M1 त्वया तात ( for च ते दृष्ट्वा ). Ñ2 आगमनं च नो द्रष्टुं. —G3 damaged for 16$^{d}$. —$^{d}$) Dt1 D6 प्रति ( for मम ). Ś1 Ñ V B D1-3.5.7 पुनराश्रममंडलं.

**17** Ñ1 illeg. for 17$^{a}$. —$^{a}$) G3 damaged for एवमु. Ś1 D1-3 [ आ ]ह ( for [ उ ]क्त्वा ). —$^{b}$) Dm1 D8 सह सीतया ( for सहलक्ष्मणः ). Ś1 Ñ1 D1-3 राघवो लक्ष्मणान्वितः. —$^{c}$) V1 B3 Dm1 D8 G3 M1 ऋषिं ( for मुनिं ). —Ñ1 illeg. for 17$^{d}$. —$^{d}$) Ś1 D1-3 गमनाय ( for प्रस्थातुम् ).

**18** $^{a}$) Dt1 Dm1 D8 G2.3 शुभतरौ; M1 शुभतरा ( for °रे ). Ś1 V1 D1.3 ततः शुभावुभौ( V1 °भतरौ ) तूणी; Ñ2 V2 B D5.7 ततः शुभतरांस्तूणान्; D2 ततस्तु तावुभौ तूणी. —$^{b}$) Ś1 Ñ1 D1-3 चाक्षय्यैः शरैः ( for चायतेक्षणा ). —$^{c}$) S1 सीता ददौ ( by transp. ); D3 ददौ मुनिस् ( for ददौ सीता ). —$^{d}$) D3 om. च. Ś1 Ñ1 D1-3 G2 शुभौ ( for ततः ). Dg1 D4 T G1 M2.3 विमलत्सरू; Dm1 D8 G3 Cm कनकत्सरू; M1 विपुलौ तदा ( for विमलौ ततः ). Ñ V B D5.7 असी चारि( B1 °रू; B3 °पा[ sic ] )निबर्हणौ. —After 18, Ś1 Ñ1 D1-3 ins. :

113* ववन्दतुस्ततस्तौ तु तत्सर्वं सुसमाहितौ ।

[ Ñ1 जगृहाते; D2 ववंदाते ( for ववन्दतुस् ). D3 तमृषिं ( for तत्सर्वं ). Ś1 तु ( for सु- ). D1 प्रीतिपूर्वं समा° ( for the post. half ). ]

**19** Ś1 Ñ1 D1.2 om. 19$^{ab}$. —$^{a}$) D6 अवध्य च ( sic ); G2 आबध्यत ( for आबध्य च ). Dm1 D8 G2.3 शुभौ ( for शुभे ). —$^{b}$) D4 T1 M3 चापौ ( for चापे ). Dm1 D8 G3 सुस्वने; D4 T1.2 °स्वनौ ( for सस्वने ). —For 19$^{ab}$, Ñ2 V B D3.5.7 subst. :

114* निबध्य तौ च तांस्तूणान्धनुषी च प्रगृह्य तौ ।

[ V D5.7 तौ तूणौ ( for तांस्तूणान् ). D3 निबधानौ च तूणीरान्धनुषी प्रतिगृह्य च. ]

—$^{c}$) Ñ2 V B D5.7 द्रष्टुम् ( for गन्तुम् ). Ś1 Ñ1 D2.3 ततो निर्ययतुर्वीरौ; Dm1 D8 G3 M1 निष्क्रांतावाश्रमपदात्; D1 ततो निर्णययतुकरौ ( sic ). —$^{d}$) Ś1 Ñ1 Dm1 D1-3.8 G3 M1 तावुभौ ( by transp. ); Ñ2 B2 D5.7 तत्र तौ( B2 °त्रस्थौ ); V1 भ्रातरौ; V2 B3.4 तत्रोभौ; B1 ततस्तौ ( for उभौ तौ ). G2 उभौ राघवलक्ष्मणौ. —After 19, Ś1 Ñ1 D1-3 ins. 117*, while B4( m. ) ins. :

# ८

G 3. 13. 1
B 3. 9. 1
L. 3. 10. 1

सुतीक्ष्णेनाभ्यनुज्ञातं प्रस्थितं रघुनन्दनम् ।
वैदेही स्निग्धया वाचा भर्तारमिदमब्रवीत् ॥ १

अयं धर्मः सुसूक्ष्मेण विधिना प्राप्यते महान् ।
निवृत्तेन च शक्योऽयं व्यसनात्कामजादिह ॥ २

त्रीण्येव व्यसनान्यत्र कामजानि भवन्त्युत ।
मिथ्यावाक्यं परमकं तस्माद्गुरुतरावुभौ ।
परदाराभिगमनं विना वैरं च रौद्रता ॥ ३

मिथ्यावाक्यं न ते भूतं न भविष्यति राघव ।
कुतोऽभिलषणं स्त्रीणां परेषां धर्मनाशनम् ॥ ४

---

115* ततः सुरम्यं विपिनं महान्त-
मतीव तौ तत्र व्यपेतसाध्वसौ ।
विचेरतुस्तापससिद्धसंघै-
र्मनीषिभिर्मोक्षफलाभिकाङ्क्षिभिः ।;

whereas Dg1 Dt1 Dm1 D4.6.8 S ins.:

116* श्रीमन्तौ रूपसम्पन्नावनुज्ञातौ महर्षिणा ।
प्रस्थितौ धृतचापौ तौ सीतया सह राघवौ ।

[ (l. 1) Dt1 D6 शीघ्रं तौ. D4 T1.2 दीप्यमानौ स्वतेजसा (for the post. half). —(l. 2) Dt1 D6 धृतचापासी. G1 राघवौ सीतया सह (by transp.) (for the post. half).]

Colophon. *Kāṇḍa name*: B om.; Ś1 Ñ1 V2 Dt1 Dm1 D3.6-8 T G M1.2 आरण्य( Ñ1 °ण्यक; V2 °ण्यके )कांडे. Ñ2 V1 D5 आरण्यके. —*Sarga name*: Ś1 Ñ V B D3.5.7 सुतीक्ष्णाश्रमनिवासः; D2 दंडकारण्यवासः. —*Sarga no.*: (figures, words or both): Ś1 Ñ1 B1.3 D2 om.; Ñ2 V2 D7 12; V1 D5 11; B2.4 D1.3 13; Dg1 Dt1 Dm1 D4.6.8 S 8. —After colophon, T2 concludes with श्रीरामचन्द्राय नमः; G with श्रीरामाय नमः.

## 8

D8 begins with ॐ; M1 with श्रीरामाय नमः.

**1** B1.4 transp. $1^{ab}$ and $1^{cd}$. —For $1^{ab}$, Ñ2 V B2.3 D5.7 subst.; while Ś1 Ñ1 B1.4 D1-3 ins. before 1 (Ś1 Ñ1 D1-3 before the colophon of Sarga 7):

117* प्रस्थितौ धृतचापौ तु तौ निशम्याथ जानकी ।

[ V1 B1.2 च (for तु).]

—Thereafter Ś1 Ñ1 D1-3 cont.:

118* हृदयंगमया वाचा भर्तारमिदमब्रवीत् ।
प्रणामपूर्वं वाक्यज्ञा समाहितमनोगतिः ।

[ Ñ1 D3 om. l. 2.]

—$^{c}$) Ñ2 B Dg1 Dt1 Dm1 D4-8 T G1.2 M3 Cr.m.g.t हृद्यया; V1 स्निग्धया (for वैदेही). V1 हृद्यया (for स्निग्धया). M2 (marg. also *sec. m.* as in text) उवाच मैथिली रामं. —For $1^{cd}$, Ś1 Ñ1 D1-3 subst.; B1.4 ins. after 1:

119* उवाच मैथिली रामं वाक्यं वाक्यविशारदा ।

[ Ñ1 वाक्यं रामं (by transp.). B1.4 D2 -विशारदं.]

**2** $^{a}$) Ñ1 नायं धर्मः; Dt1 D6 Cr.t अधर्मं तु; Dm1 D8 T3 यस्तु धर्मः; D2 अद्यं धर्म्यं; G1.3 Ck अधर्मस्तु (for अयं धर्मः). Ś1 Ñ1 Dm1 (marg. also) D1-3 T3 सुतीक्ष्णेन; G1 ससूक्ष्मेण (for सुसूक्ष्मेण). —$^{b}$) Ś1 Ñ1 D1-3 transp. प्राप्यते and विधिना. D2 महत् (for महान्). —Ś1 Ñ1 D1-3 om. $2^{cd}$. —$^{c}$) D4 विवृत्तेन; G2 निवृत्ते तु; M3 न वृत्तेन (for निवृत्तेन). Dg1 Dm1 D4.8 T2.3 M तु; G2 न (for च). T1.2 शक्तो( T1 *inf. lin.* also as in text )यं; G2 शक्योहं (for शक्योऽयं). —For 2, Ñ2 V B D5.7 subst.:

120* प्राप्यतेऽहिंसया राम धर्मः सद्भिः सदा शुभः ।
नाशनानि पुनस्तस्य सर्वाणि व्यसनान्युत ।

[ (l. 1) V हि मया (for ऽहिंसया). V1 [ आ ]शुभिः; B1 शुभ (for शुभः). —(l. 2) Ñ2 B2 D5.7 नाशकानि (for °नानि). D5 पुरस् (for पुनस्). V1 तस्मात् (for तस्य). B3 (before corr. as in text) सप्तानि; B4 (marg. also) D5.7 सप्ताहुर् (for सर्वाणि). B3 (before corr. as in text) D5.7 च (for [ उ ]त). Ñ2 स** *सनानि च (illeg.); V2 सप्तव्यचर्यसनान्युत (sic) (for the post. half).]

**3** $^{a}$) Ś1 D1-3 [ अ ]स्य; Ñ1 Dt1 Dm1 D6.8 T3 M [ अ ]द्य (for [ अ ]त्र). —$^{b}$) Ś1 Ñ1 D1-3 M2 भवंति हि (for भवन्त्युत). —$^{c}$) Ś1 Ñ1 D1.2 परतरं; Dt1 D6 T3 तु परमं; D3.4 T1.2 G1 गुरु( D3 हित )तरं (for परमकं). —$^{d}$) Ñ1 इमौ (for उभौ). Ś1 गुरुतरादिदं; D1-3 गुरुतरेत्वि( D2 °मं त्वि )ह; D4 T1.2 M2 गुरुतरे उभे( M2 इमे ); L (ed.) गुरुतरं त्विह. —For $3^{abcd}$, Ñ2 B D5.7 subst.; V subst. for 3-4:

121* तत्र कामसमुत्थानि चत्वारि व्यसनानि च ।
स्त्रियोऽक्षा मृगया पानं तस्य युक्तानि राघव ।
क्रोधोद्भवानि च त्रीणि व्यसनानि प्रचक्षते ।
मिथ्यावाक्यं तु प्रथमं यत्सद्भिस्त्यज्यते सदा ।

[ (l. 1) V2 ततः (for तत्र). B1 -समुत्थानि (for °त्थानि). Ñ2 marg.; V B चत्वार्युक्तानि राघव (for the post. half). —V B om. l. 2. —(l. 2) D5 मुक्तानि (for युक्तानि). —V om. l. 4. —(l. 4) B2 यत् (for तु). B2 सद्भिः संत्यज्यते सदा (for the post. half).]

—$^{f}$) Ś1 Ñ1 D1-3 प्राणिद्रोहश्च (for विना वैरं च).

**4** Ś1 reads 4 after 8; Ñ B1.3 D1-3.5.7 G2 transp.

तच्च सर्वं महाबाहो शक्यं वोढुं जितेन्द्रियैः ।
तव वश्येन्द्रियत्वं च जानामि शुभदर्शन ॥ ५
तृतीयं यदिदं रौद्रं परप्राणाभिहिंसनम् ।
निर्वैरं क्रियते मोहात्तच्च ते समुपस्थितम् ॥ ६
प्रतिज्ञातस्त्वया वीर दण्डकारण्यवासिनाम् ।
ऋषीणां रक्षणार्थाय वधः संयति रक्षसाम् ॥ ७
एतन्निमित्तं च वनं दण्डका इति विश्रुतम् ।
प्रस्थितस्त्वं सह भ्रात्रा धृतबाणशरासनः ॥ ८

G. 3. 13. 10
B. 3. 9. 11
L. 3. 10. 8

4 and 5. B2.4 read 4 after 6. —$^a$) Ś1 -शक्यं ( for -वाक्यं ). B4 च ( for न ). B तद् ( for ते ). —$^b$) D3 om. न ( subm. ). Ñ1 D1–3 न प्रभो ( for राघव ). Ś1 न च भविष्यति प्रभो. —$^c$) Dg1 T3 G1.3 M1 Cv [ ऽ ]भिलाषणं; D4 T2 हि लक्षणं; G2 [ ऽ ]भिलक्षणं; M2 [ ऽ ]भिलषितं ( for ऽभिलषणं ). Ś1 Ñ1 D1–3 कुलेप्यसंमतं स्त्रीणां; Ñ2 B D5.7 कुतोर्थं( B1.3 कृतं नु; B2.4 [ also ] कुतो नु )दूषणं वीर( B2 राम ). —$^d$) Ś1 Ñ1 D1–3 धर्मदूषणं; Cm कर्म° ( for धर्मनाशनं ). Ñ2 B D5.7 परस्त्रीगमनं तथा; G( ed. ) कुतः स्त्रीगमनं प्रभो. —After 4, Ñ2 B D5.7 read 124*; Dg1 Dt1 Dm1 D4.6.8 S ins. after 4 :

122* तव नास्ति मनुष्येन्द्र न चाभूत्ते कदाचन ।
मनस्यपि तथा राम न चैतद्विद्यते क्वचित् ।
स्वदारनिरतस्त्वं च नित्यमेव नृपात्मज ।
धर्मिष्ठः सत्यसंधश्च पितुर्निर्देशकारकः ।
त्वयि धर्मश्च सत्यं च त्वयि सर्वं प्रतिष्ठितम् । [ 5 ]

[ ( l. 1 ) D6 न तन् ( for तव ). —( l. 2 ) G Cr.k मनसापि ( for मनस्यपि ). T2 तदा ( for तथा ). Cv मनस्यवितथा. M3 तथैतद् ( for न चैतद् ). —( l. 3 ) Dt1 D6 T3 °तश्चैव; Dm1 D8 G1 Cr.k -निरतत्वं च ( for -निरतस्त्वं च ). —( l. 4 ) G3 पितृ- ( for पितुर् ). Cr -पारगः ( for -कारकः ). M2 reads from तुर् in पितुर् up to भिहिं in 6$^b$ in marg. *sec. m.* —After l. 4, Dm1 D8 G3 M2 ins. :

122(A)* सत्यसंध महाभाग श्रीमल्लक्ष्मणपूर्वज ।
[ M2 महाबाहो ( for °भाग ). ]

—( l. 5 ) D4 T1.2 M2 transp. धर्मश्च and सत्यं च. ]

5 Ñ B1.3 D1–3.5.7 G2 transp. 4 and 5. D1 reads ( var. ) 5$^{ab}$ twice. —$^a$) D1( first time ).3 तन्न ( for तच्च ). Ś1 Ñ1 D1–3 शक्यं ( for सर्वं ). D1( first time ) महाप्राज्ञैर् ( for °बाहो ). Ñ2 V B D5.7 तानि सर्वाणि संयतुं. —$^b$) Ś1 Ñ1 D1( second time ).3 प्राज्ञैर् ( for शक्यं ). ❀ Cm : अशक्यमिति छेदः। अतो न तव व्यसनद्वयप्रसक्तिरित्यर्थः. ❀ Ñ1 वाक्यं; Ñ2 V B D5.7 रामः; T3 भोक्तुं; M Cv.m बोद्धुं; K( ed. ) Cg धर्तुं ( for वोढुं ). Dg1 transp. शक्यं and वोढुं. D2 प्राज्ञै रोढुं ( for शक्यं वोढुं ). D1( first time ) वोढुमप्य- जितेन्द्रियैः. —$^c$) Ś1 त्वयं; Dm1 D8 तत्र ( for तव ). Ś1 Ñ1 D1–3 व( D2 प )श्येंद्रियत्वाच्च; B2 रम्येंद्रियत्वं( subm. ) ( for वश्येन्द्रियत्वं च ). —$^d$) Dt1 D6 भूतानां; G1 प्रजानां ( for जानामि ). Ñ2 V B D5.7 शुभनिश्चय( V1 °यः; B1.2.4 °यं ); D6 शुभदर्शनं ( for शुभदर्शन ). —After 5, Ñ2 V B D5.7 ins. :

123* वाक्पारुष्यं च ते राम न भूतं न भविष्यति ।
क्रोधजं व्यसनं घोरं कुतः कामसमुद्भवम् ।

[ ( l. 1 ) B1 हि ( for च ). Ñ2 **( illeg. )म ( for ते राम ). V B2.3 वाक्पारुष्याद्धि राम ( for the prior half ). V1 भूतो ( for भूतं ). —( l. 2 ) V1 क्रोध* व्यसनं ** ( lacuna ) ( for the prior half ). V1 *ताक्षाम-; B3 कृतं काम- ( for कुतः काम- ). ]

6 Ñ1 D1–3 read 6 after 4. —$^a$) D1 तृतीयं यदि रौद्रं च. —$^b$) Ś1 Ñ1 D1–3.8( after corr. ) M1 परप्राणविहिंसनं. —For 6$^{ab}$, Ñ2 B( B2.4 ins. ) D5.7 subst. and read after 4; V subst. for 6 :

124* यस्त्विदं ते व्यवसितं परहिंसाकृतं व्रतम् ।
वैरप्रसंगजननं रक्षोभिस्तन्न ते हितम् ।
[ ( l. 1 ) B1.2.4 यदिदं ( for यस्त्विदं ). ]

—Ñ2 B1.3 D5.7 read 6$^{cd}$ after 123*. —$^c$) Ñ2 B1.3 D5.7 अस्थाने( Ñ2 B1 °न ) वैरक( B1 °रिक; D7 °** )रणं; B2.4 प्रस्थानकारणं वैरे. —$^d$) Ś1 Ñ1 D2 तव चेदमुपस्थितं; D1.3 तत्र( D3 °त्त )वेदमुपस्थितं. ❀ Ck : तृतीयमित्यादि । इदं परप्राणाभिहिंसनरूपरौद्रनारूपं व्यसनमस्ति । तच्च मोहाद्यतो निर्वैरं क्रियते। तवैतन्निर्वैररौद्रतारूपं धर्मान्तरं समुपस्थितम्। एवं पाठः व्याकृतश्च। एवं स्थिते अधर्मः सूक्ष्मेण विधिना प्राप्यते महा- निति प्रथमं पठित्वा निवृत्तेन तु शक्योयं व्यसनार्थकामजादिहेति पठति। बत कुतोयं धर्म इति प्रकृते वक्ष्यमाणो वासौ येनेदं शब्देन परामृश्यते। निर्वैरं क्रियते मोहात्तच्च समुपस्थितं इति अधर्म- प्राप्त्यापादनं चोपसंहारे स्पष्टमेवासंगतम्। प्रलप्य पश्चात् पांक्त- पाठयोजनाशक्त्या प्रामादिकमित्यजल्पत् जल्पतु यथेष्टम्. ❀ —After 6, B2.4 read 4.

7 $^a$) Ś1 Ñ1 B1.3 D1–3 प्रतिज्ञातं; B2 अभिज्ञातं ( for प्रतिज्ञातस् ). G1 राम ( for वीर ). —V2 om. 7$^c$–8$^b$. —$^c$) Ś1 Ñ1 D1–3 मुनीनां ( for ऋषीणां ). Ñ2 V1 B D5.7 रक्षण- कृते ( for रक्षणार्थाय ). —$^d$) Ś1 Ñ1 D1–3 सदसि; Ñ2 V1 B1.3.4 D5.7 संप्रति ( for संयति ). —After 7, B3 ins. :

125* अवश्यमेव कर्तव्यं रक्षा चैव द्विजन्मनाम् ।

8 $^a$) Ñ1 एवं- ( for एतन्- ). Dg1 निमित्तं हि( हि marg. hypm. ). Ś1 T2 विजनं; Ñ1 Dg1 Dt1 D6 T3 वचनं; D1 गमनं; L( ed. ) विजने ( for च वनं ). D2 एभिर्निमित्तैर्विजनं. —$^b$) Dg1 दंडकां; Dt1 *डका; M2( before corr. ).3 दंड- कान्. Ś1 Ñ1 D1–3 -[ अ ]ध्युषितं पुरा ( for इति विश्रुतम् ). L( ed. ) दंडकेध्युषितं पुरा. —For 8$^{ab}$, Ñ2 V1 B D5.7 subst. :

G. 3. 13. 10
B. 3. 9. 12
L. 3. 10. 9

ततस्त्वां प्रस्थितं दृष्ट्वा मम चिन्ताकुलं मनः ।
त्वद्वृत्तं चिन्तयन्त्या वै भवेन्निःश्रेयसं हितम् ॥ ९
न हि मे रोचते वीर गमनं दण्डकान्प्रति ।
कारणं तत्र वक्ष्यामि वदन्त्याः श्रूयतां मम ॥ १०
त्वं हि बाणधनुष्पाणिर्भ्रात्रा सह वनं गतः ।
दृष्ट्वा वनचरान्सर्वान्कच्चित्कुर्याः शरव्ययम् ॥ ११
क्षत्रियाणामिह धनुर्हुताशस्येन्धनानि च ।
समीपतः स्थितं तेजोबलमुच्छ्रयते भृशम् ॥ १२
पुरा किल महाबाहो तपस्वी सत्यवाक्शुचिः ।
कस्मिंश्चिदभवत्पुण्ये वने रतमृगद्विजे ॥ १३
तस्यैव तपसो विघ्नं कर्तुमिन्द्रः शचीपतिः ।
खड्गपाणिरथागच्छदाश्रमं भटरूपधृक् ॥ १४
तस्मिंस्तदाश्रमपदे निहितः खड्ग उत्तमः ।
स न्यासविधिना दत्तः पुण्ये तपसि तिष्ठतः ॥ १५

---

126* वधार्थं रक्षसां वीर दण्डकारण्यवासिनाम् ।

[B1 वधार्थे (for °र्थं).]

—M2 reads 8ᶜ–10ᶜ in margin *sec. m.* —ᵈ) Dg1 दृढबाण- (for धृतबाण-). Ñ2 V B D5.7 गृहीत्वा सशरं धनुः. —After 8, Ś1 reads 4.

9 ᵃ) Ñ2 V B D5.7 त्वां चैव (for ततस्त्वां). D2.7 प्रथितं (for प्रस्थितं). Ś1 D1–3 ज्ञात्वा (for दृष्ट्वा). —ᵇ) G(ed.) राम (for मम). —ᶜᵈ) Ś1 Ñ1 D1.2 स्ववृत्तं; Ñ2 V B D7 सर्वतश्च; D3 सद्वृत्तं (for तद्वृत्तं). Dg1 Dt1 T2 चिंतयत्या (for चिन्तयन्त्या). Ś1 D2 च; Ñ V B D1.3.7 मे (for वै). Ś1 Ñ V B D1–3.7 M2 तव (for भवेन्). Ś1 Ñ1 परं; Ñ2 V1.2 B D3.7 नृप; D1.2 प्रति; D4 T G1.2 M1.3 हि तत् (for हितम्). G2 मम निःश्रेयसे हि तत् (for ᵈ). D5 सर्वतश्चिंत्यतामेतन्न च निःश्रेयसं नृप.

10 ᵃᵇ) V B D5.7 च (for हि). M2 गमने (for गमनं). Ñ2 V B1–3 D5.7 दंडकं (for दण्डकान्). Dg1 दंडकान्गमनं (by transp.). Ś1 Ñ1 D1–3 न रोचते मे गमनं दंडकानां महामते (D3 °वने). —ᶜ) V1 Dm1 D1.3 G3 तव; D2 तच्च (for तत्र). —ᵈ) Ñ2 V2 B1.3(also).4 D5 च मे; Dm1(also) D8 मया (for मम).

11 ᵃ) V1 बाणासि-; G1 हि नाथ (for हि बाण-). M2 -चतुष्पाणिर् (sic). —ᵇ) Ś1 Ñ1 D1–3 वनेचरः; D8 वने गतः (for वनं गतः). —ᶜ) B2 वनचरं; D2 °चरः; G2 वनगतान् (for वनचरान्). Ś1 D1.3 कांश्चित्; Ñ1 D2 कच्चित्; Ñ2 V B1.2.4 D5.7 नाथ; Dm1 D8 G3 घोरान् (for सर्वान्). B3 दृष्ट्वाथ वचनं नाथ. —ᵈ) Ś1 Ñ1 D1–3 ततः; Ñ2 V B D5.7 किं न(B1 नु); Dm1 D8 G1 क्वचित् (for कच्चित्). D1–4 T2.3 M2.3 कुर्याच् (for कुर्याः). Ś1 Ñ1 D1.2 शरक्षयं; Ñ2 शर** (illeg.); D3 शरैः क्षयं; Cr शरे व्ययं (for शरव्ययम्).

12 ᵃ) Ñ1 D4 T1.2 G1.2 M च हि; Dm1 D8 G3 अपि (for इह). Ñ2 V B D5.7 क्षत्रियस्य धनुश्चोक्तं(V B1 °नुः प्रोक्तं). Cr.k cite क्षत्रियाणां चेति. —ᵇ) Ñ2 कुलं यथा; V1 B D5.7 [इं]धनं यथा (for [इ]न्धनानि च). —ᶜᵈ) Ś1 Ñ1 D1–3 तत्समीपे (for समीपतः). D8 उच्छ्रायते; M1 उच्छ्रयते; Cr उच्छ्रीयते (for उच्छ्रयते). M2 भृगुः (for भृशम्). Ś1 Ñ1 D1–3 बलं मूर्छे(D1 °र्छे [sic])यते शुभं. Ñ2 V1 B D5.7 तत्समीपे(Ñ2 °प; B3 °पं) स्थितं भूयस्तेजो मूर्छे(B3 वर्ध)यते बलात्. —After 12, Ñ2 V B D5.7 ins.:

127* एवं हि दृष्ट्वा विक्रान्तं वित्रस्यन्ति वनेचराः ।
एकान्तेऽपि स्थितास्ते तु वधमिच्छन्ति तावकम् ।

[(l. 1) V2 दृष्ट्वा तु; B3.4 दृष्ट्वा हि (by transp.) (for हि दृष्ट्वा). D7 partly damaged for the prior half. Ñ2 D5.7 विक्रमंति; B3 वित्रसंति (for वित्रस्यन्ति). —(l. 2) Ñ2 D5.7 एकांतेव-; B2 एकांते* (for °न्तेऽपि). B2 D5.7 [ऽ]पि (for तु). Ñ2 illeg. for ते तु. V1 B2.4 वनं(V1 बलं) पृच्छंति; B3(marg. also) बलमिच्छंति (for वधमिच्छन्ति).]

13 ᵇ) V1 तपसा (for तपस्वी). Ñ2 V B D5.7 संयतेंद्रियः; Dg1 Dt1 D1.2.6 T3 G3 M2.3 सत्यवाञ्शुचिः (for सत्यवाक्शुचिः). —Ñ2 V B D5.7 om. 13ᶜᵈ. —ᶜ) Ñ1 अवसत् (for अभवत्). —ᵈ) Ś1 Ñ1 D1–3.6 वने बहु-; D8 वनेतर- (meta..) (for वने रत-). Dt1 -मृगे द्विजे. Dg1 T3 M2.3 वने कश्चि(M2 कस्मि; M3 तस्मि)न्महामुनिः; G2 वने मृगरतद्विजे (sic).

14 ᵇ) G2 भर्तुम् (for कर्तुम्). —ᶜ) G1 अथोगच्छद् (for अथागच्छद्). —ᵈ) T1.2 भटरूपधृत् (sic); T3 G1 °भृत्. —For 14, Ñ2 V B D5.7 subst.:

128* कश्चिद्वनगतः सिद्धस्तापसारण्यमाश्रितः ।

[V2 तपसारण्यम्; D5.7 तापसोरण्यम्. V1 B3 तपसे वनमाग (B3 °श्रि)तः (for the post. half).]

15 ᵃ) T3 M3 तस्मिंश्चिद्; M2 कस्मिंश्चिद् (for तस्मिंस्तदा). —ᵇ) Dm1 D4.8 T G1.2 M3 निशितः; D6 निहतः (for निहितः). —For 15ᵃᵇ, Ś1 Ñ V B D1–3.5.7 subst.:

129* तस्य केनचिदाहत्य निशितः खड्ग उत्तमः ।

[Ś1 तस्मै (for तस्य). V D3 आग(D3 °वृ)त्य (for °हत्य). Ś1 खड्गसत्तमः. Ñ2 V B1.3 D1.3.5.7 निशितं खड्गमुत्तमं (for the post. half).]

—ᶜ) Ś1 V1 B Dt1 D6.7 G1 M2 संन्यास-; Cv.r.m.g.k.t as in text (for स न्यास-). Ñ2 V B1.3 D1–3.7 दत्तं (for दत्तः). —ᵈ) D1 वने (for पुण्ये). Ñ2 V B D5.7 महति (for तपसि). Ś1 Ñ1 D1.2 वनेतः(Ś1 °ते); D3 वर्तितं; L(ed.) वर्तता (for तिष्ठतः). —After 15, M2 ins.:

स तच्छस्त्रमनुप्राप्य न्यासरक्षणतत्परः ।
वने तु विचरत्येव रक्षन्प्रत्ययमात्मनः ॥ १६
यत्र गच्छत्युपादातुं मूलानि च फलानि च ।
न विना याति तं खड्गं न्यासरक्षणतत्परः ॥ १७
नित्यं शस्त्रं परिवहन्क्रमेण स तपोधनः ।
चकार रौद्रीं स्वां बुद्धिं त्यक्त्वा तपसि निश्चयम् ॥ १८
ततः स रौद्राभिरतः प्रमत्तोऽधर्मकर्षितः ।
तस्य शस्त्रस्य संवासाज्जगाम नरकं मुनिः ॥ १९

स्नेहाच्च बहुमानाच्च स्मारये त्वां न शिक्षये ।
न कथंचन सा कार्या गृहीतधनुषा त्वया ॥ २०
बुद्धिर्वैरं विना हन्तुं राक्षसान्दण्डकाश्रितान् ।
अपराधं विना हन्तुं लोकान्वीर न कामये ॥ २१
क्षत्रियाणां तु वीराणां वनेषु नियतात्मनाम् ।
धनुषा कार्यमेतावदार्तानामभिरक्षणम् ॥ २२
क्व च शस्त्रं क्व च वनं क्व च क्षात्रं तपः क्व च ।
व्याविद्धमिदमस्माभिर्देशधर्मस्तु पूज्यताम् ॥ २३

G. 3. 13. 25
B. 3. 9. 27
L. 3. 10. 22

130* मुनेर्हस्ते कृतार्थोऽथ प्रययौ त्रिदिवं हरिम् ।

16 $^{a}$) V2 स शस्त्रं समनुप्राप्य. —$^{b}$) D2 न्याय- ( for न्यास- ). —Ñ1 illeg. from त्येव in $^{c}$ up to त्मनः in 16$^{d}$. —$^{c}$) G1 वनेषु; K( ed. ) वने तं ( for वने तु ). Dt1 D6 T3 G2 M1.2 विहरत्येव( T3 °ष; G2 °वं ); Dm1 D8 G3 °त्येवं; G1 विहरन्नेव; Cr.g.t as in text ( for विचरत्येव ). Ś1 D2 वने विचरते( Ś1 °तो ) नित्यं; Ñ1 वने विवहर ** ( illeg. ); Ñ2 V B D5.7 वनेपि न जहात्येव( V B °नं ); D1.3 वने न हारयत्येतद्.

17 $^{a}$) V1 D2 यच्छति ( for गच्छति ). —$^{b}$) Ñ2 V B D5.7 पुष्पाणि ( for मूलानि ). —Ñ1 illeg. for 17$^{cd}$. —$^{c}$) D6 खड्ग-. —$^{d}$) Ś1 D3 रक्षन्प्रत्ययमात्मनः; D1.2 रक्षन्न्यासं परस्य तं, D2 तत् ); M2 स समित्कुसुमानि च. —For 17$^{cd}$, Ñ2 V B D5.7 subst. :

131* न विना तत्र खड्गेन याति न्यासविशङ्कितः ।

[ V2 तेन खड्गेन; B2 खड्गन्यासेन ( for तत्र खड्गेन ). V -विशेषतः ( for -विशङ्कितः ). ]

18 Ñ1 B4 D4 G1 M1.2 ( before corr. ) Cr.k परिहरन् ; Ñ2 V B1–3 D5.7 M3 परिचरन् ; D1 परिदधत् ( for °वहन् ). D7 reads 18$^{cd}$ in marg. —$^{c}$) Ś1 Ñ2 B D1.3.7 रौद्रां ( for रौद्रीं ). Ś1 Dt1 D1.4 तां ( for स्वां ). —$^{d}$) T3 हित्वा ( for त्यक्त्वा ). V1 B1.3.4 D7 तापस- ( for तपसि ).

19 $^{a}$) Ś1 धर्माभिमतः; Ñ1 रौद्राभिमुनिः; Ñ2 V B D5.7 रौद्रया बुध्या; Dg1 G1.2 M2 रौद्रेभिरतः; D1–3 रौद्राभिमतिः ( D3 °तः ); M3 रौद्राभिद्दतः ( for रौद्राभिरतः ). —$^{b}$) Ñ2 V B D5.7 तदानीं ( for प्रमत्तो ). Ś1 D1–3 धर्मकोविदः; Ñ1 [ S ]धर्मवर्जितः; Ñ2 V B1.3.4 D5.7 ध( V1 क )र्मकर्पितः; B2 M2 धर्मदर्शितः; M1 धर्मदर्शने; Cr °शंकितः; Cm.g °कर्शितः ( for ऽधर्मकर्षितः ). —$^{c}$) Ñ2 D5.7 संसर्गाज् ; B1.4 सद्वासाज् ; T3 संधनाज् ( for संवासाज् ). —$^{d}$) Ñ2 V B D5.7 G1 निरयं; D1 नरकं ( for नरकं ). —After 19, B1 Dg1 Dt1 Dm1 D4.6.8 S ins. :

132* एवमेतत्पुरावृत्तं शस्त्रसंयोगकारणम् ।
अग्निसंयोगवद्धेतुः शस्त्रसंयोग उच्यते ।

[ Dg1 om. l. 1. —B1 om. l. 2. —( l. 2 ) M1 -संयोगवद्वस्तु. ]

20 $^{b}$) Ś1 D1.2.7 न ( for त्वां ). Ś1 D2 च; Ñ Dt1 D1.6.7 Ct तु ( for न ). B2 G1 निशा( G1 °शि )क्षये ( for न शिक्षये ). D3 स्मारयेन्न तु शिक्षयेत् . ❀ Ck : स्मारयेत् । पुरावृत्तमिति शेषः । अपि तु बहुमानात्त्वां तु शिक्षये । तदेव करोति कथंचनेत्यादि । एवं पांक्ते श्रद्धाजाड्यात् स्मारयेन्न तु शिक्षये इति पठित्वा कश्चिद्व्याकरोत् । तत्तु साक्षादुत्तरवाक्य-क्रियमाणं व्याहतम् । शिक्षणहेतुश्च बहुमानादित्युक्तमेव ।; Ct : न कथंचनेति यत्तु तीर्थः स्मारये त्वां न शिक्षये इति पठति व्याचष्टे च तत्तु उत्तरवाक्ये करिष्यमाणशिक्षणेन व्याहतमिति कतकः. ❀ —$^{c}$) T2 वा ( for सा ). Ś1 Ñ1 D1–3 न कथंचिदसत्कार्यं; Ñ2 V2 B D5.7 न कथंचिन्मनः( Ñ2 B2 °या ) कार्यं; V1 वधार्थं न मनः कार्यं.

21 $^{a}$) Ś1 Ñ1 D2 न युक्तास्ते त्वया हंतुं; D1.3 न युक्तं तांस्त्वया( D3 °स्तथा ) हंतुं. —$^{b}$) Ś1 D2 राक्षसा दंडकास्थिताः; Ñ1 राक्षसा दंडकागताः; L( ed. ) राक्षसा दंडके स्थिताः. —$^{c}$) M2.3 अपकारं ( for °राधं ). Ś1 Ñ1 D1–4 M1 वीर ( for हन्तुं ). —After 21$^{c}$, M2 repeats ( erroneously ) 21$^{b}$ and $^{c}$. —$^{d}$) Cv लोकाः ( for लोकान् ). D4 M1 हंतुं ( for वीर ). Ś1 Ñ1 D2.3 स्वर्लोकं परिमार्गताः; Dt1 D6 लोको( D6 °के ) वीर न मंस्यते; D1 स्वर्लोकं गतिमागताः; G3 वीर लोकान्न कामये; Ct$p$ as in text. —For 21, Ñ2 V B D5.7 subst. :

133* राक्षसानां विना वैरं वधो वीर न युज्यते ।
अपराधादृते नापि हन्तव्या राक्षसास्त्वया ।

22 $^{a}$) Ñ V B D3.5.7 हि; G1 च ( for तु ). Ś1 D2 सर्वेषां; Ñ2 V B D5.7 G1 शूराणां ( for वीराणां ). —$^{b}$) Ñ2 V B D5.7 स्वधर्म-; Dg1 T3 G1.2 M3 वने तु; G3 वने* ( for वनेषु ). Ś1 Ñ2 V1 B3.4 D1.3–5.7 T1.2 G1.3 M1 Cm.g.k निरतात्मनां ( for नियता° ). D6 वने ताभ्यां धृतात्मनां. —$^{c}$) V कार्यते तावद्; B1 धार्यते तावद्; B4 क्रियते तावद् ( for कार्यमेतावद् ). B2 धनुषः क्रियतां तावद्. —$^{d}$) T3 आत्मानम् ( for आर्तानाम् ). Ś1 N V B1.3.4 D1–3.5.7 परिर( D3 °मो )-क्षणं; B2 परिपालनं ( for अभिरक्षणम् ).

23 $^{a}$) V1 बलं; B1 धनं; G( ed. ) रणं ( for वनं ). B3

G. 3. 13. 25
B. 3 9. 28
L. 3. 10. 23

तदार्य कलुषा बुद्धिर्जायते शस्त्रसेवनात् ।
पुनर्गत्वा त्वयोध्यायां क्षत्रधर्मं चरिष्यसि ॥ २४
अक्षया तु भवेत्प्रीतिः श्वश्रूश्वशुरयोर्मम ।
यदि राज्यं हि सन्न्यस्य भवेस्त्वं निरतो मुनिः ॥ २५
धर्मादर्थः प्रभवति धर्मात्प्रभवते सुखम् ।
धर्मेण लभते सर्वं धर्मसारमिदं जगत् ॥ २६
आत्मानं नियमैस्तैस्तैः कर्षयित्वा प्रयत्नतः ।
प्राप्यते निपुणैर्धर्मो न सुखाल्लभ्यते सुखम् ॥ २७
नित्यं शुचिमतिः सौम्य चर धर्मं तपोवने ।
सर्वं हि विदितं तुभ्यं त्रैलोक्यमपि तत्त्वतः ॥ २८
स्त्रीचापलादेतदुदाहृतं मे
धर्मं च वक्तुं तव कः समर्थः ।
विचार्य बुध्या तु सहानुजेन
यद्रोचते तत्कुरु माचिरेण ॥ २९

इति श्रीरामायणे अरण्यकाण्डे अष्टमः सर्गः ॥ ८ ॥

(marg.) क का वाचं (sic) (for क च वनं). —$^b$) Ś1 B4 D1.2 क च क्षत्रं; B1 सूत्रं क च; B2 क्षात्रं क च (by transp.) (for क च क्षात्रं). Ñ2 D5.7 क वै तप:; D2.3 M2 क वा तप: (for तप: क च). —Ñ1 partly illeg. for 23$^{cd}$. —$^c$) Ś1 विरुद्धम् (for व्याविद्धम्). Dm1 D8 G3 अस्माकं (for अस्मामिर्). Ñ2 D5.7 प्रायो सिद्धमिदं सर्वम्; V B प्रतिषिद्धमिदं सर्वम्. —$^d$) Ś1 Ñ2 V B D2.3.5.7 एष (for देश-). V1 M2 च (for तु). Ñ2 पूज्यते; V1 गृह्यतां; D5.7 युज्यते (for पूज्यताम्). B3.4 प्रयुज्यतां (for तु पूज्यताम्). —After 23, Ñ2 V B D5.7 ins.:

134* त्वमार्य कलुषां बुद्धिं त्यजैनां शास्त्रगर्हिताम् ।

[V2 खल्विमां (for कलुषां). V B3 [ए]तां (for [ए]नां).]

24 Ñ2 V B D5.7 read 24$^{ab}$ after 25$^{ab}$. —$^a$) Ś1 Ñ1 D1-3 अनार्या(Ś1 D2 °र्य-); Ñ2 V B D5.7 अकार्य-; Dt1 D6 कंदर्प; G(ed.) अधर्म-; Ck.t कदर्य- (for तदार्य). —Ñ1 illeg. from 24$^b$ up to त्वा in 24$^c$. —$^b$) D1 जायसे शरसेवनात्. —$^c$) Ñ2 V B D5.7 गत्वा पुनर् (by transp.). D6 om. (subm.); G1.2 [अ]पि (for तु). —$^d$) B3 G1 क्षात्रधर्मं; D3 क्षात्रं धर्मं (for क्षत्रधर्मं). D2 वरिष्यसि (for चरिष्यसि).

25 $^a$) Ñ2 V B1-3 D5.7 हिं; B4 च (for तु). —$^b$) D1-3 श्वश्रू(D2 श्वश्रा)णामिति भावये. —After 25$^{ab}$, Ñ2 V B D5.7 read 24$^{ab}$. —$^c$) D4 T1.2 Cv.m परित्यज्य; D6 असन्न्यस्य (for हि सन्न्यस्य). Ś1 Ñ V B D1-3.5.7 यदि राज्ये (B1 °ज्ञो)पि संत्यक्ते(Ś1 Ñ1 °क्तो). —$^d$) Ś1 विरतो; Ñ2 V B D5.7.8 (after corr.) नियतो; D2 भरतो (sic) (for निरतो).

26 $^a$) Dg1 धर्मादर्थं; D3 धर्मार्थश्च (for धर्मादर्थः). Ś1 Dg1 D2 T3 G1.2 M प्रभवते (for °ति). —$^b$) D3 तस्मात् (for धर्मात्). Ñ2 D5.7 संपद्यते (for प्रभवते). V2 स्वयं (for सुखम्). —Ñ1 illeg. for 26$^{cd}$. —$^c$) B1.2.4 D5.7 लभ्यते (for लभते). Ś1 D2 स्वर्गं; Ñ2 V B1.2.3 (also as in text).4 D5.7 स्वर्गो (for सर्वं).

27 V2 illeg. for 27$^{ab}$. —$^a$) D7 नियतैस् (for नियमैस्). Ś1 सर्वैः; V1 तैस्तु; D2 सत्यैः (for तैस्तैः). —$^b$) Dt1 Dm1 D2-4.6 S कर्शयित्वा (for कर्षयित्वा). B3 पुनः पुनः (for प्रयत्नतः). —Ñ1 illeg. for 27$^{cd}$. —$^c$) Ś1 D2 निपुणो; D1 निर्गुणैर्; D3 विपुलो; G1 नियमैर् (for निपुणैर्). Ñ2 V B D5.7 पुरुषैः स्वर्गो (for निपुणैर्धर्मो). —$^d$) Ś1 Ñ2 V Dt1 Dm1 D8 T1 M3 लभते; Cm as in text (for लभ्यते).

28 $^a$) Ś1 Ñ1 D1-3 शुचितपाः; Dm1 शुचिमतः (for °मतिः). Dm1 D8 G3 सम्यक् (for सौम्य). —$^b$) G2 M1 चरन् (for चर). Ś1 Ñ1 D1-3 भव धर्मं(Ś1 °र्मे; D1 °र्मी; D3 °र्मा) तपोधन(D1.3 °नः); L(ed.) भज धर्मं तपोधन. —$^c$) Dt1 Dm1 D6.8 T3 G2 तु (for हि). Dg1 स्वभाव- (for सर्वं हि). Ś1 Ñ1 D1-3 लोके (for तुभ्यं). —$^d$) Ś1 Ñ1 न च राघव; D1-3 तव राघव (for त्रैलोक्यमपि). D2 यत्नतः (for तत्त्वतः). Dm1 D8 G3 M1 त्रैलोक्ये यद्धि(G3 M1 °द्धि)वर्तते. —For 28, Ñ2 V B D5.7 subst.:

135* अहिंसानिरतः सौम्य भव धर्मपरायणः ।
सर्वं हि ते सुविदितं लोके राघव तत्त्वतः ।

[(l. 1) B2 -नियतः (for -निरतः).]

29 $^a$) T2 श्रीचापलाद् (for स्त्री°). Ñ D8 उपाहृतं (for उदाहृतं). B4 मया (for मे). —$^b$) Ś1 Ñ V B D1-3.5.7 हि (for च). D5 युक्तं (for वक्तुं). G1 त्वयि (for तव). —$^c$) D3 च; M2.3 नु (for तु). G2 सह लक्ष्मणेन (for तु सहानुजेन). —Ñ1 partly illeg. for $^d$. —$^d$) Ś1 Ñ2 (m.) B2-4 D3.5.7 ते (for तत्). Ś1 V1 B D2.3.5.7 कुरु तं(D2 वै) नरेंद्र; D1 क्रियतां नरेंद्रः (for कुरु माचिरेण).

Colophon. Ñ1 illeg. —*Sarga name*: Ś1 Ñ2 V1 B1 D1.5.7 सीतावाक्यं; V2 B3 D3 दंडकारण्यप्रवेशे सीतावाक्यं; B2 D2 दंडकारण्यनिवेशे(D2 °वासे) सीतावाक्यं; B4 दंडकप्रवेशे सीतावाक्यं. —*Sarga no.*: (figures, words or both): Ś1 B1 D2 om.; Ñ2 V2 B3 D5.7 13; V1 12; B2.4 D1.3 14; Dg1 Dt1 Dm1 D4.6.8 S 9. —After colophon, G concludes with श्रीरामाय नमः.

## ९

वाक्यमेतत्तु वैदेह्या व्याहृतं भर्तृभक्तया ।
श्रुत्वा धर्मे स्थितो रामः प्रत्युवाचाथ मैथिलीम् ॥ १
हितमुक्तं त्वया देवि स्निग्धया सदृशं वचः ।
कुलं व्यपदिशन्त्या च धर्मज्ञे जनकात्मजे ॥ २
किं तु वक्ष्याम्यहं देवि त्वयैवोक्तमिदं वचः ।
क्षत्रियैर्धार्यते चापो नार्तशब्दो भवेदिति ॥ ३
ते चार्ता दण्डकारण्ये मुनयः संशितव्रताः ।
मां सीते स्वयमागम्य शरण्याः शरणं गताः ॥ ४
वसन्तो धर्मनिरता वने मूलफलाशनाः ।
न लभन्ते सुखं भीता राक्षसैः क्रूरकर्मभिः ॥ ५
काले काले च निरता नियमैर्विविधैर्वने ।
भक्ष्यन्ते राक्षसैर्भीमैर्नरमांसोपजीविभिः ॥ ६
ते भक्ष्यमाणा मुनयो दण्डकारण्यवासिनः ।
अस्मानभ्यवपद्येति मामूचुर्द्विजसत्तमाः ॥ ७
मया तु वचनं श्रुत्वा तेषामेवं मुखाच्च्युतम् ।
कृत्वा चरणशुश्रूषां वाक्यमेतदुदाहृतम् ॥ ८

G. 3. 14. 8
B. 2. 10 8
L. 3. 11. 8

## 9

D8 begins with ॐ; M1 with श्रीरामाय नमः.

**1** $^{a}$) D7 एव ( for एतत् ). —$^{b}$) Ñ2 V B D5.7 धर्मसंहितं ( for भर्तृभक्तया ). —$^{cd}$) Dg1 Dt1 Dm1 D6.8 T3 G M जानकीं ( for मैथिलीम् ). Ś1 Ñ1 D1.2 धर्मयुक्तं निशम्याथ रामः सीतामुवाच ह. ❀ Ck : संवर्धितः संवर्धितधर्मबोधः । एवं पाठः ।; Ct : संवर्धितः इति पाठे संवर्धिततेजाः । धर्मस्थितः इति पाठान्तरम् . ❀ —For 1$^{cd}$, Ñ2 V B D5.7 subst. :

136* निशम्य वचनं रामो मैथिलीं प्रत्युवाच ह ।

[ G( ed. ) मधुरं ( for वचनं ). D5 प्रत्यभाषत. ]

**2** $^{a}$) Ñ2 D1 हितयुक्तं ( for °मुक्तं ). G1 दैव- ( for देवि ). —$^{b}$) D7 हीदृशं ( for सदृशं ). Ñ1 illeg. for वचः. —D5 om. ( hapl. ) from 2$^{c}$-3$^{b}$. —$^{c}$) Ñ2 V B D7 स्व( B1 त्व )-मभिसंधाय; D1 व्युप° ( for व्यपदिशंत्या च ). —$^{d}$) Ś1 Ñ1 D1-3 धर्मज्ञं, D3 पितरं ) मि( D2 मै )थिलेश्वरं; Dm1 D8 G3 जनकस्य महात्मनः; M3 जनकानां महात्मनां.

**3** D5 om. 3$^{ab}$ (cf. v.l. 2). —$^{a}$) Ñ1 V2 B1.2.4 Dt1 Dm1 D6.8 G M1 Cv.r.m.t नु; Ñ2 V1 B3 D7 ते; D2 च; Cmp as in text ( for तु ). Ś1 Ñ1 D1-3 [ अ ]हं सीते; Ñ2 V B D7 सुश्रोणि; Dm1 हे सीते ( for [ अ ]हं देवि ). —$^{b}$) Ñ2 V B D7 यत्त्वया; M2 त्वया च ( for त्वयैव ). Ś1 D2 इति प्रिये ( for इदं वचः ). —$^{c}$) D4 T1.2 G1.2 transp. क्षत्रियैर् and धार्यते. Ś1 D1-3 M2 Cv चापं; Ñ2 V B D5.7 शस्त्रं( V1 °स्त्रो [ sic ] ) ( for चापो ). —$^{d}$) Ś1 नातु-; Ñ1 नातुः ( sic ); Dg1 D1.2 आर्त- ( for नार्त- ). B3 -धर्मो ( for -शब्दो ). D1 यदि ( for इति ). B4 ( marg. also as in text ) आर्तधर्मो भवेदिह.

**4** K( ed. ) transp. 4$^{ab}$ and 4$^{cd}$. —$^{b}$) B2.4 Dm1 ( before corr. ) D1.2.5.8 शंसितव्रताः ( for संशित° ). —$^{c}$) Ś1 च ते ( for सीते ). Ś1 B1.3.4 T2 आगत्य; D2 आनम्य ( for °गम्य ). Ñ V B ( B4 before corr. ) Dg1 Dt1 D5.6 T3 G1 M2.3 शरण्यं; D2 चारण्याः; D7 °रणं ( for शरण्याः ). D3 शंसितव्रताः; D4.7 T3 M2.3 शरणागताः ( for शरणं गताः ).

**5** Ś1 om. 5$^{ab}$. —$^{a}$) Ñ2 D5 वसंतिः; V1 वसंते ( for वसन्तो ). Dt1 D6 कालकालेषु ( for धर्मनिरता ). —$^{b}$) Ñ1 B4 -फलाशिनः; B3 D4 -फलाशनः ( sic ) ( for -फलाशनाः ). —$^{c}$) M3 शमं ( for सुखं ). Ś1 D1-3 निद्रां; Ñ1 विप्राः; Ñ2 V B D5.7 सीते; Dg1 Dt1 Dm1 D6.8 T3 G M भीरु ( for भीता ). —$^{d}$) Ñ2 B3 D5 पिशित( B3 परम )प्रियैः; V1 प्रसभं प्रिये; V2 अभिपीडिताः; M2 भीम°; G( ed. ) परिपीडिताः ( for क्रूरकर्मभिः ).

**6** Dg1 T3 G1.2 M3 om. 6; Dt1 D6 om. 6$^{ab}$; M2 reads 6 in marg. *sec. m.* —$^{a}$) Dm1 D8 G3 M1.2 सर्वकालेषु; Ct कालकालेषु ( for काले काले च ). D4 ( orig. also as in text ) T2 नियता ( for निरता ). Ś1 Ñ1 D1-3 सर्वकालं हि( Ś1 च ) नियता; Ñ2 V B D5.7 नियताः सर्वकालेषु. —$^{b}$) M2 बहुभिर् ( for विविधैर् ). Ś1 Ñ1 घनैः; Dm1 D8 G3 M1.2 युताः ( for वने ). —$^{c}$) Ś1 Ñ2 V B D2.5.7 घोरैर् ( for भीमैर् ). —$^{d}$) Ś1 Ñ1 D1.2 नररक्तामिषाशिभिः; Ñ2 V B D3.5.7 विकृतैर्वनचारि( D3 °तैरामिषाशि )भिः.

**7** $^{a}$) Dg1 Dm1 D8 G3 तैर् ( for ते ). B4 D1.2 भक्ष-माणा. —$^{b}$) D5 दंडकारण्यमाश्रिताः. —$^{c}$) Ś1 D1-3 अभ्यवपद्यैव( D1 °वं ); Ñ1 अभ्युपगम्येव; Ñ2 B1 अभ्युपपद्यैव; V B2-4 D4.5.7 अभ्युपपत्स्येति ( V1 D4 °द्येति; V2 D5.7 °त्यैव; B3 [ *sup. lin.* also ] °त्स्ययेति; B4 °त्स्येह ); Dg1 °पद्यंतो; T3 °पश्यंतो ( for अभ्यवपद्येति ). —$^{d}$) Ñ2 V B तऊ( Ñ2 °मू )-चुर्; D5 तदूचुर्; G( ed. ) तन्नोचुर् ( for मामूचुर् ). Ś1 Ñ1 D1-3 द्विज( Ś1 D1 मुनि )पुंगवाः; Ñ2 V B D5.7 भयविह्वलाः ( for द्विजसत्तमाः ).

**8** $^{a}$) Ñ2 V B D5.7 च; D6 तद् ( for तु ). G1 सीते वचनं ( for वचनं श्रुत्वा ). —$^{b}$) G1 श्रुत्वा ( for तेषाम् ). Ś1 V2 Dm1 D1-4.8 T G2.3 M1.3 एवं; Ñ2 V1 B D5.7 एतन् ; G1 तेषां ( for एवं ). Ś1 Ñ1 D1-3 मुखोद्गतं; Ñ2 B1-3 मुखच्युतं ( for मुखाच्च्युतम् ). —$^{cd}$) Dt1 Dm1 D6.8 G Cr.m.k.t

G. 3. 14. 9
B. 3. 10. 8
L. 3. 11. 9

प्रसीदन्तु भवन्तो मे ह्रीरेषा हि ममातुला ।
यदीदृशैरहं विप्रैरुपस्थेयैरुपस्थितः ।
किं करोमीति च मया व्याहृतं द्विजसंनिधौ ॥ ९
सर्वैरेव समागम्य वागियं समुदाहृता ।
राक्षसैर्दण्डकारण्ये बहुभिः कामरूपिभिः ।
अर्दिताः स्म भृशं राम भवान्नस्त्रातुमर्हति ॥ १०
होमकाले तु संप्राप्ते पर्वकालेषु चानघ ।
धर्षयन्ति स्म दुर्धर्षा राक्षसाः पिशिताशनाः ॥ ११
राक्षसैर्धर्षितानां च तापसानां तपस्विनाम् ।
गतिं मृगयमाणानां भवान्नः परमा गतिः ॥ १२
कामं तपःप्रभावेन शक्ता हन्तुं निशाचरान् ।
चिरार्जितं तु नेच्छामस्तपः खण्डयितुं वयम् ॥ १३
बहुविघ्नं तपो नित्यं दुश्चरं चैव राघव ।
तेन शापं न मुञ्चामो भक्ष्यमाणाश्च राक्षसैः ॥ १४
तदर्द्यमानान्रक्षोभिर्दण्डकारण्यवासिभिः ।
रक्ष नस्त्वं सह भ्रात्रा त्वन्नाथा हि वयं वने ॥ १५
मया चैतद्वचः श्रुत्वा कार्त्स्न्येन परिपालनम् ।
ऋषीणां दण्डकारण्ये संश्रुतं जनकात्मजे ॥ १६

---

वचन-; Cmp. tp as in text ( for चरण- ). ❀ Ck : वचनशुश्रूषामिति । वचनानुष्ठानलक्षणशुश्रूषामित्यर्थः । कृत्वा मनसि कृत्वा । एवं प्राचीनः पांक्तः पाठः । योजनाशक्त्या चरणशुश्रूषामिति पठन्ति मृदवः पौराणिकाः । एवमेतैर्बहुशः प्राचीनपाठनाशनम् . ❀ Ś1 Ñ1 D1-3 उक्तमेतद्वचस्तेषु तन्मे शृणु वरानने.

9 [b] ) Dg1 Dt1 D6 G1 M2.3 ह्रीरेषा तु; T2 प्रीतिरेषा ( for ह्रीरेषा हि ). Ś1 Ñ1 D1-3 पीडा चैवा( D2 व्रीडा चैषा )-तुला मम; Ñ2 V B D5.7 पीडै( V2 सीतै )षा मम दारुणा. ❀ Ct : एषा ममाह्रीरकीर्तिः अतः प्रसीदन्त्वित्यर्थः । तीर्थस्तु एषा मम ह्रीः अतः प्रसीदन्त्विति व्याचष्टे. ❀ —[c] ) Dg1 D4 यद् ( for यदि ). G1 ईदृशम् ( for °शैर् ). Dm1 D8 उपस्थेयैर् ( for अहं विप्रैर् ). —[d] ) Ś1 कर्मस्थैयैर् ; Dm1 D8 अहं वीरैर् ; D7 om. ( for उपस्थेयैर् ). Ñ1 illeg.; Dt1 उपस्थितं ( for °स्थितः ). —[e] ) D2 तथा ( for मया ). Ñ2 V B D5.7 मया किं करणीयं च( V1 वै ). —[f] ) Ñ2 B1.3 D7 ( all with hiatus ) इत्युक्ते; V2 B2.4 D5 ( V2 D5 with hiatus ) इत्युक्तो( B2 °क्तं ); D3 व्याहृता ( for व्याहृतं ). Ś1 Ñ1 D1-3 जनसंसदि; Dm1 D8 G3 मुनि° ( for द्विजसंनिधौ ).

10 [a] ) Ś1 Ñ1 D1-3 अथ; D4 T1.2 एतैः ( for एव ). Ñ2 V B1.3.4 D5 च तैरार्तैर् ; B2 हितरासर् ; D7 च तै** ( for समागम्य ). —[b] ) Ś1 Ñ1 D1-3 समुदीरिता. —[c] ) D4 दंडकारण्यैर् ( for °रण्ये ). —[d] ) G( ed. ) क्रूरकर्मभिः. —[e] ) T2 आगताः; G1 °तान् ( for अर्दिताः ). Ś1 Ñ1 B2-4 ( marg. ) D1-3 स्मो; G1.2 सु- ( for स्म ). Ñ2 V1 D5.7 वयं; Dg1 D4 T1.2 G M दृढं ( for भृशं ). —[f] ) Dg1 Dt1 D4.6 T G2 M2.3 Cg.k.t तत्र रक्षतु ( for त्रातुमर्हति ). Ś1 Ñ1 D1-3 तेभ्यो रक्षस्व( Ñ1 °स्मात्रक्ष ) राघव; Ñ2 V B D5.7 तेभ्यो नस्त्रातुमर्हसि.

11 [a] ) Ś1 D1-3 च संप्राप्ते; Ñ V B D5.7 [ ऽ ]ग्निहोत्राणां ( for तु संप्राप्ते ). D4 T1.2 होमकालेषु संप्राप्ताः. —[b] ) V1 सर्व-; Ck पूर्व- ( for पर्व- ). V1 चानघे ( sic ); M1 राघव ( for चानघ ). Ś1 Ñ1 B D1-3 पर्वकाले च ते सदा( Ñ1 B1 D1.3 राघव ). —[c] ) Ś1 D2-4 T1.2 सु-; Ñ1 च ( for स्म ). Ñ1 दुर्धर्ष- ( for °र्षा ). Ñ2 V B क्रुद्धाः प्रधर्ष( Ñ2 °दृष )यंत्यस्मान्; D5.7 क्रुद्धाः प्रहर्षयंत्यस्मान् ( sic ). —[d] ) Ñ1 दुर्धर्षाः ( for राक्षसाः ). Ś1 पिशिताशिनः.

12 [a] ) Ś1 D1-3 भक्षितानां च; Ñ2 V B D5 पीड्यमानानां; D7 पीड्यमीना च ( sic ). —[b] ) Ñ1 ताप * * ( illeg. ); V1 तापितानां ( for तापसानां ). Ś1 Ñ1 D1-3.5 महात्मनां; M2 तर° ( for तपस्विनाम् ). —[c] ) M2 मार्गयमाणानां ( for मृग° ). Ñ2 V B D5.7 नान्या विमृष( B3 °* )तामस्ति. —[d] ) Ñ2 V B D5.7 त्वदृते; G1 भवान्हि ( for भवान्नः ).

13 [a] ) Ś1 D2 -प्रसादेन; Ñ1 B1.3 -प्रभावेण. —[b] ) Ś1 शत्रुं शक्ता; B2 हंतुं शक्ता ( by transp. ); D1.2 शक्ताः शत्रुं ( for शक्ता हन्तुं ).

☞ V2 illeg. from च in 13[b] up to 3.10.41[d]. Ñ1 D3 शक्त्या: शत्रुं निशाचराः. —[c] ) Ñ1 न न; Ñ2 B1.4 D5.7 च न; Dt1 D2.6 न च ( for तु न ). Ś1 [ इ ]च्छाम ( for °मस् ). —[d] ) Ś1 वरं; B1 स्वयं ( for वयम् ).

14 V2 illeg. for 14 ( cf. v.l. 13 ). D1 om. 14-15. —[a] ) Ñ2 V1 B D5.7 चतुं; G1 राम ( for नित्यं ). —[b] ) V1 चापि; B2 M3 ( before corr. ) तव ( for चैव ). Ñ1 देवदानवैः ( for चैव राघव ). —[c] ) Ñ2 V1 D5.7 शापान्न; D3 शापेन ( sic ) ( for शापं न ). —[d] ) Ñ1 भक्ष्यमाणापि; V1 Dg1 T2 भक्षमाणाश्च. Ś1 D2.3 निशाचरैः ( for च राक्षसैः ).

15 V2 illeg. for 15 ( cf. v.l. 13 ). D1 om. 15 ( cf. v.l. 14 ). —[a] ) Ś1 D3 तानर्द्यमानान् ; Dm1 D8 G2.3 M1.2 तद्ध( M2 ते ह )न्य°; D2 तांस्तर्ज्य°; D5.7 तद्वध्य° ( for तदर्द्यमानान् ). —[b] ) V1 D3 G1.3 -वासिनः ( for -वासिभिः ). —[c] ) Dg1 Dt1 D6 T3 Ct रक्षकस्त्वं ( for रक्ष नस्त्वं ). Ś1 रक्ष त्वं सहितो भ्रात्रा; Ñ1 D2.3 रक्ष( Ñ1 illeg. ) त्वं सह नो( Ñ1 च )भ्रात्रा; Ñ2 V1 B1.2 D5.7 रक्ष त्वं सहवासेन; B1( marg. also ).4 रक्ष राम सह भ्रात्रा; B3 रक्षास्मांश्चाप्युद्यम्य. —[d] ) Ś1 ( with hiatus ) अनाथा; T1 त्वनाथा ( for त्वन्नाथा ). Ś1 Ñ1 D2.3 वने वयं ( by transp. ).

16 V2 illeg. for 16 ( cf. v.l. 13 ). —[a] ) Ñ1 हि; D1.3 तु; G1 तद् ( for च ). Ś1 Ñ1 D1-3 तद्वचः; G1 वचनं ( for [ ए ]तद्वचः ). —[b] ) Ñ2 B D5.7 यत्नेन; V1 यत्वनने ( sic );

संश्रुत्य च न शक्ष्यामि जीवमानः प्रतिश्रवम् ।
मुनीनामन्यथा कर्तुं सत्यमिष्टं हि मे सदा ॥ १७
अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् ।
न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः ॥ १८
तदवश्यं मया कार्यमृषीणां परिपालनम् ।
अनुक्तेनापि वैदेहि प्रतिज्ञाय तु किं पुनः ॥ १९
मम स्नेहाच्च सौहार्दादिदमुक्तं त्वया वचः ।
परितुष्टोऽस्म्यहं सीते न ह्यनिष्टोऽनुशिष्यते ।
सदृशं चानुरूपं च कुलस्य तव शोभने ॥ २०
इत्येवमुक्त्वा वचनं महात्मा
सीतां प्रियां मैथिलराजपुत्रीम् ।
रामो धनुष्मान्सह लक्ष्मणेन
जगाम रम्याणि तपोवनानि ॥ २१

G. 3. 14. 24
B. 3. 10. 22
L. 3. 11. 23

## इति श्रीरामायणे अरण्यकाण्डे नवमः सर्गः ॥ ९ ॥

M2 कृत्स्नेन ( for कार्त्स्न्येन ). Ñ1 D3 परिपालने. —$^{d}$ ) Ś1 Ñ V1 B D1-3.5.7 लोकसाक्षिकं.

17 V2 illeg. for 17 ( cf. v.l. 13 ). —$^{a}$ ) Dt1 संश्रुत्य *. V1 transp. च and न. Ñ2 V1 B D5.7 Ck शक्नोमि; G1 वक्ष्यामि ( for शक्ष्यामि ). —$^{b}$ ) Ñ2 B1 D7 जीवन्नेतं; V1 B2.3 °न्नेवं; B4 D5 °न्नेतत् ( for जीवमानः ). V1( marg. also as in text ) B1.4 D5 Cm प्रतिश्रुतं; B3 परि° ( for प्रतिश्रवम् ). —For $17^{ab}$, Ś1 Ñ1 D1-3 subst. :

137* स संश्रुत्य न शक्ष्यामि दण्डकारण्यवासिनाम् ।

[ Ñ1 समाश्रुत्य ( for स संश्रुत्य ). Ś1 रक्षामि ( for शक्ष्यामि ). ]

—$^{c}$ ) D3 वचनं ( for अन्यथा ). —After 17, M2 ins. the lines of 3.8.26 with v.l. धर्मार्थं लभते ( also धर्मात्प्रभवते [ *sec m.* ] ).

18 V2 illeg. for 18 ( cf. v.l. 13 ). —$^{a}$ ) V1 त्यक्ष्ये; M2 जह्यात् ( for जह्यां ). —$^{b}$ ) V1 B3.4 D5.7 च ( for वा ). B1.2 T1 त्वां सीते सहलक्ष्मणां. —Ś1 om. $18^{c}$–$19^{b}$. —$^{c}$ ) Dg1 M1 न हि; D3 नानु- ( for न तु ). B2 वैदेहि ( for संश्रुत्य ). Ñ1 न प्रतिज्ञां प्रतिश्रुत्य. —$^{d}$ ) Ñ V1 B D1-3.5.7 ब्राह्मणेषु ( for ब्राह्मणेभ्यो ). —After 18, D3 ins. a passage relegated to App. I ( No. 1 ).

19 V2 illeg. for 19 ( cf. v.l. 13 ). Ś1 om. $19^{ab}$ ( cf. v.l. 18 ). —$^{a}$ ) Ñ2 D5.7 तच्चावश्यं; D1-3 अवश्यं तु ( for तदवश्यं ). Dt1 महा- ( for मया ). —After $19^{ab}$, Ñ2 V1 B D5.7 ins. :

138* अनुद्वेगेन ये धर्मं साधयन्ति मनीषिणः ।
रक्षार्थं मुनिसंघानामेतदुक्तं मया वचः ।

[ ( l. 1 ) V1 यद् ( for ये ). Ñ2 D5.7 धारयंति; B2 धर्म° ( for साधयन्ति ). —( l. 2 ) B3 मुनिसिंहानाम् ( for °संघानाम् ). D5.7 ववतु ( for उक्तं ). B1 ह्यहं; B2 [ अ ]थ ह; B3 सह; B4( marg. also [ अ ]थ ह ) [ अ ]च्युत; G( ed.) [ अ ]पि ह ( for वचः ). ]

—$^{c}$ ) Ś1 D1-3 [ ए ]व; Ñ1 [ इ ]ह ( for [ अ ]पि ). M1 कर्तव्यं ( for वैदेहि ). —$^{d}$ ) Ś1 D2 [ ए ]व किं; Ñ1 च किं; Dg1 Dm1 D8 T3 G1.3 M [ अ ]थ किं; Dt1 D6 Ct कथं; D1 [ इ ]ह किं; D3 G2 हि किं ( for तु किं ). Ñ2 D5.7 किं पुनः प्रतिसंश्रवे; V1 B किं पुनः सत्यसंश्रवे( V1 °ये; B3 °वं; B4 [ also ]°वात् ). —After 19, Ñ2 V1 B D5.7 ins. :

139* यद्वक्त्वा तु त्वया सीते हितमुक्तं वचो मम ।

20 V2 illeg. for 20 ( cf. v.l. 13 ). Ñ2 V1 B D5.7 transp. $20^{abcd}$ and $20^{ef}$. —$^{a}$ ) G3 M1 मयि ( for मम ). ❀ Cm : ममेति मयीति विभक्तिव्यत्यय आर्षः. ❀ Ś1 Ñ V1 B D1-3.5.7 मम स्नेहेन प्रीत्या च. —$^{b}$ ) Ś1 D2 यदुक्तं च; Ñ V1 B D1.3.5.7 यदुक्तोऽहं; T1 एवमुक्तं ( for इदमुक्तं ). V1 प्रिये; D4 T1.2 [ अ ]नघे ( for वचः ). —$^{c}$ ) Ś1 Ñ V1 B D1-3.5.7 वैदेहि ( for [ अ ]हं सीते ). —$^{d}$ ) Ñ V1 B D1.5.7 [ अ ]निष्टो हि; T3 G1 M1 Cm*p* ह्यतुष्टो ( for ह्यनिष्टो ). Ñ2 V1 B( B4 marg. also ) D1.5.7 Ct [ अ ]नुशास्यते; D6 °शस्यते; D8 °शिष्यसे; G2 °शिक्ष्यते ( for ऽनुशिष्यते ). Ś1 D2 निषेद्धुं न त्वया क्षमः; D3 नानिष्टस्त्ववशिष्यते. —Ś1 Ñ1 D1-3 om. $20^{ef}$. —$^{f}$ ) K( ed. ) चात्मनः ( for शोभने ). —After 20, Dg1 Dt1 Dm1 D4.6.8 S ins. :

140* सधर्मचारिणी मे त्वं प्राणेभ्योऽपि गरीयसी ।

[ G1 स्व- ( for स- ). G1 नित्यं; G3 damaged ( for मे त्वं ). M2 सह धर्मं चर त्वं मे ( for the prior half ). Dg1 reads गरीयसी in marg. ]

21 V2 illeg. for 21 ( cf. v.l. 13 ). —$^{a}$ ) Ñ2 V1 B D5.7 एतावद् ( for इत्येवम् ). B4 ( marg. also as in text ) मनोरमं ( for महात्मा ). —$^{b}$ ) Ñ1 सती- ( for सीतां ). V1 B1.4 D5.7 तदा; B2.3 तथा; D3 वरां ( for प्रियां ). Ś1 Ñ1 D1-3 राजवरस्य पुत्रीं. —$^{c}$ ) Ñ1 स्वधर्मा ( sic ) ( for धनुष्मान् ). —$^{d}$ ) Ś1 Ñ1 D1-3 पुण्यानि ( for रम्याणि ). Ñ2 D7 ततो वनानि ( for तपो° ).

# १०

G. 3. 15. 1
B. 3. 11. 1
L. 3. 12. 1

अग्रतः प्रययौ रामः सीता मध्ये सुमध्यमा ।
पृष्ठतस्तु धनुष्पाणिर्लक्ष्मणोऽनुजगाम ह ॥ १
तौ पश्यमानौ विविधाञ्शैलप्रस्थान्वनानि च ।
नदीश्च विविधा रम्या जग्मतुः सह सीतया ॥ २
सारसांश्चक्रवाकांश्च नदीपुलिनचारिणः ।
सरांसि च सपद्मानि युतानि जलजैः खगैः ॥ ३
यूथबद्धांश्च पृषतान्मदोन्मत्तान्विषाणिनः ।
महिषांश्च वराहांश्च गजांश्च द्रुमवैरिणः ॥ ४
ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे ।
ददृशुः सहिता रम्यं तटाकं योजनायतम् ॥ ५
पद्मपुष्करसंबाधं गजयूथैरलंकृतम् ।
सारसैर्हंसकादम्बैः संकुलं जलचारिभिः ॥ ६
प्रसन्नसलिले रम्ये तस्मिन्सरसि शुश्रुवे ।
गीतवादित्रनिर्घोषो न तु कश्चन दृश्यते ॥ ७

Colophon. V2 illeg. —*Kāṇḍa name* : B1.4 D1.2 om.; Ś1 Ñ1 B2.3 Dg1 Dt1 Dm1 D3.4.6–8 T G M1.2 आरण्य (Ñ1 B3 °ण्यक; B2 °ण्यके) कांडे; Ñ2 V1 D5 आरण्यके. —*Sarga name* : Ś1 Ñ1 B1 D1.3 रामवाक्यं; Ñ2 V1 D5.7 दंडकारण्यप्रवेशः; B2–4 दंडकारण्यप्रवेशे राम (B3 श्रीराम)-वाक्यं; D2 दंडकारण्ये रामवाक्यं. —*Sarga no.* (figures, words or both) : Ś1 Ñ1 B1 D2 om.; Ñ2 B3 D5.7 14; V1 13; B2.4 D1.3 15; Dg1 Dt1 Dm1 D4.6.8 T G1.2 M 10; G3 illeg. —After colophon, T2 concludes with श्रीरामार्पणं; G1.2 with श्रीरामाय नमः.

## 10

D8 begins with ॐ; M1 with श्रीरामाय नमः.

**1** V2 illeg. for 1–41$^{cd}$ (cf. v.l. 3.9.13). —$^{a}$) Ś1 D1–3 तु ययौ; Ñ2 V1 B1.4 D5.7 [ऽ]थ ययौ; B3 [ऽ]थ गतो (for प्रययौ). B2 अथाग्रतो ययौ रामः. —$^{b}$) Dt1 D6 सुशोभना (for सुमध्यमा). —G3 damaged for 1$^{c}$–2. —$^{c}$) B3 च; D4 T1.2 स (for तु). —$^{d}$) Ś1 D2 प्र-; B3 च; Dg1 M2 [ऽ]थ (for ऽनु-). D1 च (for ह).

**2** V2 illeg.; G3 damaged (cf. v.l. 1). —$^{a}$) M2 (after corr. *sec. m.* as in text) विबुधान् (for विविधान्). —$^{b}$) D8 शैलोपस्थान् . —For 2$^{ab}$, Ś1 Ñ1 D1–3 subst. :

141* ते प्रेक्ष्यमाणान्विविधाञ्शैलान्प्रस्रवणानि च ।

[Ś1 सं- (for ते). D2 शैल- (for °लान्). Ñ1 D1–3 प्रश्रवणानि. ]

—$^{c}$) Ś1 transp. विविधा and रम्या. —$^{d}$) Ś1 D1–3 प्रययुः (D1.3 ययुस्ते) सहिताः सुखं; Ñ1 ययुश्च सहिताः स्वयं; G1 जग्मतुः सीतया सह. —For 2, Ñ2 V1 B D5.7 subst. :

142* पश्यन्तौ तौ च रम्याणि वनान्युपवनानि च ।
पर्वतांश्च नदीश्चैव राघवौ सह सीतया ।

[(l. 1) Ñ2 D5.7 तौ पश्यंतौ (by transp.). B4 तु (for first च). —B3 reads in marg. from l. 2 up to st. 3. —(l. 2) V1 वनोद्देशान्; D5 नदीश्चै* (for नदीश्चैव). B3.4 सीतया सह (by transp.).]

**3** V2 illeg. (cf. v.l. 1). B3 reads 3 in marg. (cf. v.l. 2). —$^{b}$) Ś1 Ñ1 D1–3 पश्यंतः पुलिनाश्रितान् (D2 °ताः). —$^{c}$) Ś1 Ñ1 D1–3 विचित्राणि; B1.2 सुपद्मानि (for सपद्मानि). —$^{d}$) D3 तुष्टानि; D4 T2 M1 युक्तानि; M2 reads *inf. lin. sec. m.* (for युतानि). G1 वनजैः (for जल°). Ñ2 V1 B D5.7 नानापक्षिगणानि च (V1 B3.4 °नपि).

**4** V2 illeg. (cf. v.l. 1). —$^{a}$) Ś1 Ñ1 D1–3 बद्धयूथांश्च हरिणान्; Dt1 D6 Cr.m.t यूथबंधांश्च पृषतां; M2 ऋक्षांश्च पृषतांश्चैव. —$^{b}$) Ś1 D2.3 मदोद्ध (D3 °द्धू) तान् ; M2 (after corr. *sec. m.* as in text) मदोन्मत्त- (for °न्मत्तान्). —For 4$^{ab}$, Ñ2 V1 B D5.7 subst. :

143* हरीणां यूथपांश्चैव मदोद्धूतांश्च कुञ्जरान् ।

—G3 damaged from षांश्च in 4$^{c}$ up to गजां in 4$^{d}$. —$^{c}$) D4 reads first श्च in marg. —$^{d}$) D4 T1.2 Cg नागांश् (for गजांश्). Ś1 Ñ1 D1–3 तथान्यांश्च (Ñ1 °न्यान्वै) महामृगान् ; Ñ2 V1 B D5.7 गवयांश्च (V1 B2–4 °यान्स्) -मरांस्तथा.

**5** V2 illeg. (cf. v.l. 1). —$^{c}$) Ś1 ददृशे. Ś1 Ñ2 D1–3 सर्वतो (for सहिता). —$^{d}$) Ś1 Ñ V1 B D1–3.5.7 त (Ś1 D2 ता) डागं. Ś1 Ñ D2.7 G2 M1 योजनायुतं.

**6** V2 illeg. (cf. v.l. 1). —$^{a}$) Ś1 Ñ1 D1.2 फुल्ल-; D3 बहु- (for पद्म-). Ñ1 -पुष्कज- (sic) (for -पुष्कर-). Ś1 Ñ1 D1–3 -संछन्नं (for -संबाधं). —$^{c}$) Ñ1 D1.3 कुररी- (for सारसैर्). Dg1 Dm1 D3.8 T3 M2 -कारंडैः (for -कादम्बैः). Ś1 D2 कुररैर्हंसचक्रैश्च. —$^{d}$) Dt1 Dm1 D6.8 Cr.k.t जलजातिभिः (for °चारिभिः). ❀ Ck : जलचारिभिरिति पौराणिकेच्छा. ❀ Ś1 मंजुवंजुलवारिभिः. —For 6, Ñ2 V1 B D5.7 subst. :

144* पद्मोत्करविचित्रान्तं गजयूथविलोडितम् ।
शरारिहंसकुररैराकीर्णं जलचारिभिः ।

[(l. 1) V1 D5.7 पद्माकर- (for पद्मोत्कर-). B2 -यूप- (for -यूथ-). V1 -विनोदितं. —(l. 2) V1 B1.3 सरारि- (for श°). D5 आकीर्णैर् (for °र्णं).]

**7** V2 illeg. (cf. v.l. 1). —$^{a}$) Ś1 प्रमत्त-; B1 प्रसन्ने;

ततः कौतूहलाद्रामो लक्ष्मणश्च महारथः ।
मुनिं धर्मभृतं नाम प्रष्टुं समुपचक्रमे ॥ ८
इदमत्यद्भुतं श्रुत्वा सर्वेषां नो महामुने ।
कौतूहलं महज्जातं किमिदं साधु कथ्यताम् ॥ ९
तेनैवमुक्तो धर्मात्मा राघवेण मुनिस्तदा ।
प्रभावं सरसः कृत्स्नमाख्यातुमुपचक्रमे ॥ १०
इदं पञ्चाप्सरो नाम तटाकं सार्वकालिकम् ।
निर्मितं तपसा राम मुनिना माण्डकर्णिना ॥ ११
स हि तेपे तपस्तीव्रं माण्डकर्णिर्महामुनिः ।
दशवर्षसहस्राणि वायुभक्षो जलाश्रयः ॥ १२
ततः प्रव्यथिताः सर्वे देवाः साग्निपुरोगमाः ।
अब्रुवन्वचनं सर्वे परस्परसमागताः ।
अस्माकं कस्यचित्स्थानमेष प्रार्थयते मुनिः ॥ १३
ततः कर्तुं तपोविघ्नं सर्वैर्देवैर्नियोजिताः ।
प्रधानाप्सरसः पञ्च विद्युच्चलितवर्चसः ॥ १४

G. 3. 15. 14
B. 3. 11. 15
L. 3. 12. 15

---

D2 प्रच्छन्न- ( for प्रसन्न- ). —$^{c}$ ) D1 -निर्घोषं. —$^{d}$ ) Ñ1 D1.3 न हि; Ñ2 D5.7 न च; Dm1 D8 G3 तत्र ( for न तु ). Dm1 G3 कश्चिन्न; D8 कस्मिन्न; G1 किंचन ( for कश्चन ). Ñ2 B D5.7 कश्चिद्दृश्यत; V1 कश्चिदवुध्यते ( for कश्चन दृश्यते ).

8 V2 illeg. ( cf. v.l. 1 ). —$^{a}$ ) G3 कुतूहलाद् ( for कौ° ). —$^{b}$ ) Ś1 Ñ1 Dm1 D1–3.8 G1.3 महाबलः; Ñ2 B1 D5.7 °यशाः; V1 B2.3.4( m. also °बलः ) °मनाः ( for °रथः ). —$^{c}$ ) Ś1 D2 -रतिं वीरः; Ñ1 -परं वीरं; V1 -भृ* नाम; B2 -रतं नाम; D1.3 -हतं( D3 -चरं ) वीरः ( for -भृतं नाम ). —$^{d}$ ) Ñ2 V1 B D5.7 पप्रच्छतुरुपेत्य वै; G1 संप्रष्टुमुपचक्रमे.

9 V2 illeg. ( cf. v.l. 1 ). —$^{a}$ ) Ś1 Ñ V1 B Dm1 D1–3.5.7.8 दृष्ट्वा ( for श्रुत्वा ). B4( m. also ) श्रुत्वैनमद्भुतं शब्दं. —$^{b}$ ) Ñ1 B1–3 D1.3.5.7 महाद्युते; V1 D2 °मते ( for °मुने ). Ś1 सर्व एव महाद्युते. —$^{c}$ ) Ś1 मम कौतूहलाज्जातं. —$^{d}$ ) Dm1 D8 एतत् ( for इदं ). Dg1 reads साधु कथ्यताम् in marg. Ñ1 गम्यतां ( for कथ्यताम् ). —After 9, K( ed. ) ins. :

145* वक्तव्यं यदि चेद्विप्र नातिगुह्यमपि प्रभो ।

10 V2 illeg. ( cf. v.l. 1 ). —$^{b}$ ) Ś1 Ñ1 D1–3 ततः; Dg1 M3 तथा ( for तदा ). Ñ2 V1 B D5.7 महात्मना ( for मुनिस्तदा ). —$^{c}$ ) Dg1 D4 T1.2 M2.3 Cg प्रभवं ( for प्रभावं ). M2 सरसं. Ś1 Ñ1 D1–3 तस्य; Dg1 Dt1 D6 T3 क्षिप्रम् ( for कृत्स्नम् ). Ñ2 V1 B D5.7 प्रभावं तस्य सरस( B3 सर्वं हि ). —$^{d}$ ) Ś1 Ñ1 D1–3 वक्तुं सम्-; B3 D6 व्याख्यातुम् ( for आख्यातुम् ).

11 V2 illeg. ( cf. v.l. 1 ). V1 om. $11^{ab}$. —$^{a}$ ) Ś1 पंपासरो; M2 पंचाप्सरं. —$^{b}$ ) Dg1 Dm1 D6.8 M2.3 सर्वकामिकं( Dg1 D6 °लिकं ) ( for सार्वका° ). Ś1 ताडागं पौर्वकामिकं; Ñ1 D1–3 तडागं( Ñ1 सरो वै ) पूर्वकालिकं; Ñ2 B1.3.4 D5.7 सरः( Ñ2 राम ) पौराणमुच्यते; B2 निर्मितं मंदकर्णिना. —B2 om. $11^{cd}$. —$^{c}$ ) Ñ1 gloss विश्वकर्मणा ( for निर्मितं ) and नाम ( for राम ). —$^{d}$ ) Ś1 Ñ V1 B1.3.4 D1–3.5.7 मंद ( Ś1 D2 मद )कर्णिना ( here and below ); G1.3 मांडुकर्णिना ( here and below ).

12 V2 illeg. ( cf. v.l. 1 ). —$^{a}$ ) Ñ1 महत् ; D3 स ह; D4 स ति ( sic ); T2 स च ( for स हि ). B2 शीघ्रं ( for तीव्रं ). —$^{b}$ ) B2 मंदकर्णिर् ; D2.3 मं( D2 म )दकर्णि-; D4 मांडुकर्णी-; T1 मांडकर्णि-; T3 मांढकर्णिर् . Ñ1 महायशाः ( for °मुनिः ). D1 मंदकर्णिमहायशाः. —$^{d}$ ) B1.3 वायुभक्ष्यः. Ś1 D1–3.7 शिलाशयः; Ñ1 Dt1 Dm1 D6.8 T3 M1.3 जलाशयः( Dt1 D6 T3 M3 °ये ); Ñ2 V1 B( B4 m. also as in Ś1 ) D5 शिलासनः; Cg as in text ( for जलाश्रयः ).

13 V2 illeg. ( cf. v.l. 1 ). —$^{a}$ ) G3 देवाः ( for सर्वे ). —Dt1 om. ( hapl. ) $13^{bc}$. —$^{b}$ ) G3 सर्वे ( for देवाः ). Ñ2 V1 B D5.7 इंद्र-; M2.3 सेंद्र- ( for साग्नि- ). —$^{c}$ ) Ś1 Ñ1 D2 ते वै; D3 चैव ( for सर्वे ).—$^{d}$ ) Ś1 Ñ1 D1.3 -समागमे ( for -समागताः ). —$^{f}$ ) D2 अयं ( for एष ). Ś1 Ñ1 D1–3 द्विजः ( for मुनिः ). —For $13^{cdef}$, Ñ2 V1 B D5.7 subst. :

146* अब्रुवन्नयमस्माकं स्थानं प्रार्थयते मुनिः ।

[ Ñ2 नु किम् ; B4 वरम् ; D5.7 न किम् ( for अयम् ).

—After 13, Ś1 L( ed. ) read 15; while Dg1 Dt1 Dm1 D4.6.8 S ins. :

147* इति संविग्नमनसः सर्वे तत्र दिवौकसः ।

[ G2 संविघ्नमनसः. T1.2 सर्वे ते त्रिदिवौकसः ( for the post. half ). ]

14 V2 illeg. ( cf. v.l. 1 ). D2 repeats ( var. ) $14^{ab}$ after 15. —$^{a}$ ) Ñ2 V1 B D2( first time ).5.7 तस्य; G3 Cg तत्र ( for ततः ). —$^{b}$ ) Ś1 Ñ1 Dm1 D1.2( second time ).3.4.8 T1.2 G3 देवैः सर्वैर् ( by transp. ); Dg1 Ct सर्वदेवैर्( Dg1 देवैर् in marg. ). D6 वियोजिताः ( for नियो° ). Ñ2 V1 B D2( first time ).5.7 नियुक्ताः( B4 [ m. after corr. ]°क्ैः ) सर्वदैवतैः( D2 °देवतैः ). —$^{c}$ ) D2 दिव्या अप्सरसः पंच; M1 प्रथिताप्सरसः पंच. —Ś1 which reads 15 after 13 om. ( hapl. ) $14^{d}$, $16^{a}$–$17^{a}$; L( ed. ) om. ( hapl. ) $14^{d}$ and $16^{a}$. —$^{d}$ ) Ñ1 illeg.; D1.3 -ज्वलित-; G2 -सदृश- ( for -चलित- ). Ñ2 V1 B D2.5.7 दिव्याभरणभूषिताः. —After 14, B3 ins. :

148* भावहावसमायुक्ता मोहिनीतुल्यरूपकाः ।

—B3 cont.; while Ñ2 V1 B1.2.4 D2.3.5.7 ins. after 14:

G. 3. 30. 5
B. 3. 24. 5
L. 3. 29. 5

सधूमाश्च शराः सर्वे मम युद्धाभिनन्दिनः ।
रुक्मपृष्ठानि चापानि विवेष्टन्ते च लक्ष्मण ॥ ५
यादृशा इह कूजन्ति पक्षिणो वनचारिणः ।
अग्रतो नो भयं प्राप्तं संशयो जीवितस्य च ॥ ६
संप्रहारस्तु सुमहान्भविष्यति न संशयः ।
अयमाख्याति मे बाहुः स्फुरमाणो मुहुर्मुहुः ॥ ७
संनिकर्षे तु नः शूर जयं शत्रोः पराजयम् ।
सुप्रभं च प्रसन्नं च तव वक्त्रं हि लक्ष्यते ॥ ८
उद्यतानां हि युद्धार्थं येषां भवति लक्ष्मण ।
निष्प्रभं वदनं तेषां भवत्यायुःपरिक्षयः ॥ ९
अनागतविधानं तु कर्तव्यं शुभमिच्छता ।
आपदं शङ्कमानेन पुरुषेण विपश्चिता ॥ १०
तस्माद्गृहीत्वा वैदेहीं शरपाणिर्धनुर्धरः ।
गुहामाश्रय शैलस्य दुर्गां पादपसंकुलाम् ॥ ११

---

5 $^{a}$) Ś1 D2 सधूम्र( D2 °म्रा )श्वसनाः सर्वे; Ñ2 V B D5.7 सधूमा इषवश्चेमे; D1 सधूमा धूसराः सर्वे. —$^{b}$) Ñ2 V B D5.7 महा- ( for मम ). Ś1 Ñ1 D1-3 -[ अ ]भिकांक्षिणः; Dg1 Dt1 Dm1 D6.8 Cm. -[ अ ]भिनंदिताः ( for -[ अ ]भिनन्दिनः ). —After 5$^{ab}$, T3 ins. :

411* ऋक्षव्याघ्रमृगाः सर्वे नदन्ति विकृतस्वरैः ।

—$^{cd}$) D2 जातानि ( for चापानि ). Dg1 Dt1 D2.3.6 T1 G2 M3 Ct विचेष्टंते; Dm1 D8 G3 चे( G3 वे )ष्टंतेपि; D1 प्रसरंति ( for विवेष्टन्ते ). M1 वेष्टंते चापि लक्ष्मण ( for $^{d}$ ). Ñ2 V B D5.7 रुक्मपृष्ठमिदं चापि चापं विस्फुरतीव मे. —After 5, D1.3 ins., Ñ2 V B3.4( marg. ) D5.7 ins. after 9.

412* निमित्तानि च पश्यामि शरीरे पार्थिवात्मज ।
आत्मनो यानि तान्याहुर्घोरं प्राणिनिबर्हणम् ।

[ ( l. 1 ) D1 प्रपश्यामि; D3 च पश्याम ( for च पश्यामि ). —( l. 2 ) B4 प्राण- ( for प्राणि- ). D3 घोरान्प्राणिनिवर्हण ( for the post. half ). D1 आत्मनः पालितान्पापान्घोरान्प्राणनिबर्हणान् . ]

6 $^{a}$) G2 मम; M2 इव ( for इह ). Ś1 Ñ1 D1-3.6 यादृशं. हि( Ñ1 यथा च * ) विकूजंति; Ñ2 V B D5.7 यथा च नि( V2 B वि )नदंती मे. —$^{c}$) D4 भृशं; Cm [ अ ]भयं ( for भयं ). Cv प्राप्तः ( for प्राप्तं ). Ñ2 V1 B D5.7 M2 अत्युग्रं( B2 सद्यश्च ) नो( M2 हि ) भयं घोरं( Ñ2 M2 प्राप्तं ). —$^{d}$) V1 B1 मे; G2 ह ( for च ).

7 V2 om. 7. Dg1 reads 7$^{ab}$ in marg.. —$^{a}$) Ś1 Ñ1 D2 च ( for तु ). Ñ2 V1 B D5.7 सुतुमुलः; D1 G1 तु महान् ( subm. ) ( for तु सुमहान् ). Dm1 D8 G3 M1 स( M1 सु ) संप्रहारः सु( M1 °रस्तु )महान् ; T2 सुप्रहारस्तु मतिमन् . —$^{b}$) Ñ2 V1 B D5.7 भवितेह ( for भविष्यति ). Ñ1 सदारुणं; D3 सुदारुणः ( for न संशयः ). —$^{cd}$) Ś1 आख्याति दक्षिणो बाहुः; D1 अयं सव्यस्तु मे बाहुः ( for $^{c}$ ). G2 न संशयः ( for मुहुर्मुहुः ). Ñ2 V1 B D5.7 यथा स्फुरत्ययं बाहुर्दक्षिणो मम लक्ष्मण.

8 $^{a}$) M3 संनिकृष्टस ( for संनिकर्षे ). Dg1 च मे शूर; D2 च नो वीर; D3 वने वीर; M1 तु नो वीर ( for तु नः शूर ). D1 दृश्यते संनिकर्षे ते; M2 संनिकर्षस्तु नो वीर. —$^{b}$) Dg1 D2 M2.3 जयः शत्रोः( D2 °त्रु- ) पराजयः. —For 8$^{ab}$, Ś1 Ñ V B D5.7 subst :

413* संनिकृष्टश्च नो वीर जयः शत्रोः पराजयः ।

[ Ś1 Ñ1 संनिकर्षश्. B2 मे वीर. Ś1 Ñ1 शत्रु- ( for शत्रोः ). ]

—$^{c}$) Ś1 सुप्रभावं; V सुप्रभं सु-; Dg1 D1 T3 Cm.g.k सप्रभं च; D3 प्रसभं च ( for सुप्रभं च ). —$^{d}$) Ñ1 च लक्षये; D4 M1 च लक्ष्यते; T2 हि लक्ष्मण ( for हि लक्ष्यते ). Ñ2 V B D5.7 यथेदं वदनं तव( V2 B1.3 मम ); D1.3 वदनं तव लक्ष्यते.

9 $^{a}$) Ś1 उद्धतानां; Ñ2 D5.7 तद्गतानां; V तद्यतानां ( for उद्यतानां ). Ñ1 तु; B2 M3 च ( for हि ). Ś1 Ñ V B D2.3.5.7 युद्धाय. T3 युद्धार्थमुद्यतानां हि. —Ñ1 om. 9$^{bc}$. —$^{b}$) Ś1 तेषां; Dg1 T3 G3 एषां ( for येषां ). D7 लक्षणं ( for लक्ष्मण ). —$^{c}$) M2( after corr. *sec. m.* as in text ) निष्प्रभच्छादनं ( for निष्प्रभं वदनं ). Ś1 D2 दीनं ( for तेषां ). —$^{d}$) V1 Dg1 Dm1 D4.8 T2.3 M1.2( after corr. *sec. m.* ) -परिक्षये. Ś1 Ñ1 D2.3 ते( Ñ1 ये )षां विद्यात्पराजयं. —After 9, Ñ2 V B3.4( m. ) D5.7 ins. 412*. —After 9, Dg1 Dt1 Dm1 D4.6.8 S ins. :

414* रक्षसां नर्दतां घोरः श्रूयते हि महाध्वनिः ।
आहतानां च भेरीणां राक्षसैः क्रूरकर्मभिः ।

[ ( l. 1 ) Dg1 नदतां. Dt1 D6 घोषः; G3 घोरं ( for घोरः ). Dg1 Dt1 D6 [ s ]यं; D4 T G1 च ( for हि ). M3 महान्ध्वनिः. —( l. 2 ) T2 om. च ( subm. ). ]

10 $^{a}$) Ś1 Ñ1 D2.3 च ( for तु ). —$^{b}$) Ś1 Ñ1 D2 शुभलक्ष्मण; Ñ2 V B D5.7 इह( V1 °ति ) लक्ष्मण; D3 शुभदर्शन; T1.2 G1.2 M2 जयमिच्छता. Dg1 reads 10$^{cd}$ in marg. —$^{c}$) Dg1 शंसमानेन; D1.3 तर्तुकामेन ( for शङ्कमानेन ). Ś1 Ñ1 D2 आत्म( Ñ1 उप; D2 अप )देशं सदा वीर; B3 आपदाशंकमानेन. —$^{d}$) D1 विजानता.

11 $^{a}$) Ś1 Ñ1 D2.3 त्वं गृहीत्वा तु वैदेहीं; Ñ2 V B D5.7 तस्मात्सीतां गृहीत्वा त्वं; D1 त्वं सीतां गृह्य वैदेहीं. —$^{b}$) B3 Dg1 शरपाणि- ( for °पाणिर् ). —$^{c}$) Ś1 Ñ1 D2.3 आविश; B1.3 ( before corr. as in text ) ( for आश्रय ). M3 भद्रं ते ( for शैलस्य ). —$^{d}$) D5.7 दुर्ग- ( for दुर्गां ). Ś1 Ñ V B1-3 D2-5.7 M2 -संवृतां; B4 D1 -संकटां ( for -संकुलाम् ). —For 11$^{cd}$, T3 subst. :

415* गुहामाश्रय सौमित्रे शीघ्रेण वचनान्मम ।
शैलराजस्य महतीं दुर्गां पादपसंकुलाम् ।

प्रतिकूलितुमिच्छामि न हि वाक्यमिदं त्वया ।
शापितो मम पादाभ्यां गम्यतां वत्स माचिरम् ॥ १२
एवमुक्तस्तु रामेण लक्ष्मणः सह सीतया ।
शरानादाय चापं च गुहां दुर्गां समाश्रयत् ॥ १३
तस्मिन्प्रविष्टे तु गुहां लक्ष्मणे सह सीतया ।
हन्त निर्युक्तमित्युक्त्वा रामः कवचमाविशत् ॥ १४
स तेनाग्निनिकाशेन कवचेन विभूषितः ।
बभूव रामस्तिमिरे विधूमोऽग्निरिवोत्थितः ॥ १५
स चापमुद्यम्य महच्छरानादाय वीर्यवान् ।
बभूवावस्थितस्तत्र ज्यास्वनैः पूरयन्दिशः ॥ १६
ततो देवाः सगन्धर्वाः सिद्धाश्च सह चारणैः ।
ऊचुः परमसंत्रस्ता गुह्यकाश्च परस्परम् ॥ १७

G. 3. 30. 20
B. 3. 24. 22
L. 3. 29. 19

—After 11, Ñ2 V2 B D5.7 ins. :

416* भव त्वं शस्त्रसंपन्नो वैदेह्या सह लक्ष्मण ।
उत्पातानां भयं घोरं नैव द्रक्ष्यसि च स्वयम् ।
भवस्वावहितस्तत्र ज्यास्वनैः पूरयन्दिशः ।

[ B2 om. (hapl.) l. 1–2. B1.4 read l. 3 before l. 1. —(l. 1) V2 B1.3.4 तत्र (for भव). G(ed.) सह संवस (for सह लक्ष्मण). —(l. 2) B3 उत्पातांश्च; G(ed.) आगतानां (for उत्पातानां). B1.3.4 [ए]तद् (for [ए]व). —B3 om. l. 3. ]

12 [a]) D3.8 Cmp प्रतिकूलितम्. Ñ2 D5.7 प्रतिकूलतया वाक्यं; V B1.2 प्रतिकूलतयैष्टव्यं; B3.4 प्रतिकूलितमेष्टव्यं; G(ed.) प्रतिकूलं तु देष्टव्यं. —[b]) Ś1 Ñ1 D2.3 न तु; Ñ2 V B D5.7 नैव (for न हि). D5.7 वाच्यम् (for वाक्यम्). Ś1 Ñ1 D3 अहं; D1 इह (for इदं). —[c]) Ś1 Ñ1 D2.3 शा(Ś1 ख्या)पितः खल्वसि मया; V B D5.7 शापितो ह्यसि पद्भ्यां(B °ह्या) मे; D1 शपथैर्मम पद्भ्यां तु; M2 शापितो मम पद्भ्यां तु; M3 शापितोसि मम प्राणैर्. —[d]) Ś1 Ñ1 V B2–4 D2.3.5.7 वीर; B1 धीर; Dm1 D8 G तत्र (for वत्स). B1 नो चिरं. —After 12, V B2.4 ins. :

417* उत्तरं न च वक्तव्यं वीर्यज्ञोऽसि ममानघ ।

[ G(ed.) च न (by transp.). B4 कर्तव्यं (for वक्तव्यं). V मयानघ; G(ed.) त्वयानघ. ];

while Dg1 Dt1 Dm1 D1.4.6.8 S ins. after 12 :

418* त्वं हि शूरश्च बलवान्हन्या ह्येतान्न संशयः ।
स्वयं तु हन्तुमिच्छामि सर्वानेव निशाचरान् ।

[ (l. 1) M2 शक्तश् (for शूरश्). D1 M2 दांतश्च; M3 शक्तश्च (for बलवान्). Dg1 Dt1 D1.6 T3 एतान् (for ह्येतान्). —(l. 2) Dg1 Dt1 Dm1 D6.8 T3 G3 स्वयं नि-; M1 तानहं; M2 अहं तु (for स्वयं तु). G2 M2.3 एतान् (for एव). ]

13 [a]) Dm1 D8 स (for तु). —[b]) Ś1 Ñ1 D2.3 सीतामादाय लक्ष्मणः. —[c]) Ñ2 V1 D5.7 शरम् (for शरान्). Ś1 Ñ1 D2.3 सशरं धनुरादाय. —[d]) Ś1 V1 गुहादुर्गं. Ñ2 B D5.7 उपाश्रयत्; V1 अपाश्रयत्; G1 समाश्रितः (for समाश्रयत्).

14 [a]) D1 च (for तु). Ñ2 V B D5.7 गुहां प्रविष्टे तु (by transp.). —[b]) Dg1 सीतया सह (by transp.). —[cd]) Ś1 D2 हंतैतद्युक्तम्; D1.3 हंत निर्जितम्; D4 T2 हंत निर्यातम्; Cv.r.m.g.k.t as in text (for हंत निर्युक्तम्). Ś1 आदधे; Ñ1 D2.3 आददे; D1 आक्षिपत् (for आविशत्). Ñ2 V B D5.7 राघवः कृतमित्युक्त्वा बबंध (V1 ररंध) कवचं दृढं.

15 [a]) D1 [अ]र्क- (for [अ]ग्नि-). Ś1 D1–3 -प्रकाशेन; Ñ2 -विकाशेन (for -निकाशेन). —[b]) Ñ1 समावृतः (for विभूषितः). —[cd]) Ś1 D2 M2 रामस्तिमिरं; D3 तिमिरं सर्वं; G3 तिमिरे रामो (by transp.) (for रामस्तिमिरे). Ñ2 V1 B D5.7 रराज रामस्तिमिरं; D1 विधूय तिमिरं घोरं (for [c]). Dg1 Dt1 Dm1 D6.8 T2.3 M1.3 महानग्निर्; D1 बभूवार्क (for विधूमोऽग्निर्). Ś1 Ñ2 V B D2.3.5.7 M2 विधूयार्क (B1–3 °मार्क; D2 °यार्कम्; M2 °याग्निर्) इवोदितः (for [d]). Ñ1 घनांधकारतिमिरे बभावर्क इवोदितः.

16 [a]) D4 T1 महान् (for महच्). D3 समुद्यम्य महच्चापं. —[b]) Ś1 चापम् (sic) (for शरान्). Ñ1 D2.3 चादाय (for आदाय). Ñ2 V B D5.7 M3 शरांश्चा(B1 °राना)शीविषोपमान्. —[c]) Ñ2 V B D5.7 रामो (for तत्र). Ś1 Dt1 D3.6 Ct संबभूवा(D3 ततो वीरः)स्थितस्तत्र. —After 16, Ś1 Ñ1 B2–4 D2.3 ins. :

419* सधूमशिखराश्चास्य तूणस्था जज्वलुः शराः ।
पर्वतानामिवौषध्यः सूर्येऽस्तं समुपागते ।
द्विगुणं पौरुषं चास्य तेजश्च प्रत्यपद्यत ।
ऊर्मयः सागरस्येव यथा पर्वणि पर्वणि ।

[ (l. 1) Ñ1 B2–4 स(Ñ1 वि)धूमाः सशिवा(Ñ1 *शिखा; B4 सशिरा)श्चास्य; D3 विधूमाश्चाग्निशिखाश्च (for the prior half). —B3 repeats l. 2–4 after l. 2 of 423*. —(l. 2) B2.3 पर्वतस्था (for पर्वतानाम्). B3 (second time) पर्वताद्दहिते **; B4 पर्वस्था इव चौषध्यः (for the prior half). B2.3 (first time) सूर्येस्ते (for °ऽस्तं). Ñ1 सूर्ये चास्तमुपागते (for the post. half). —(l. 3) B2.3 (both times).4 तेन (for चास्य). B2 तेजस्तश्चाभ्यवर्धत; B3 (first time) तेजश्चास्य वर्धत (subm.); B3 (second time).4 तेजश्चास्याभ्यवर्धत; D2 तेजश्च प्रतिपद्यत; D3 तेजसा समपद्यत (for the post. half). —(l. 4) Ñ1 D3 उदयः; B2.3 (both times) रामस्य (for ऊर्मयः). B2.3 (first time) पर्वणि ह्युदिते रवौ (B2 विधौ); B3 (second time).4 पर्वण्यभ्युदिते रवौ (for the post. half). ]

17 [a]) Ś1 Ñ V B D1.2.5.7 देवर्षि(B2 °वाश्च)गंधर्वाः. —[b]) Dm1 D8 M2.3 परमर्षयः (for सह चारणैः). —After 17[ab], Dg1 Dt1 Dm1 D4.6.8 S ins. :

G. 3. 30. 21
B. 3. 24. 23
L. 3. 29. 20

चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् । | एकश्च रामो धर्मात्मा कथं युद्धं भविष्यति ॥ १८

420* समेयुश्च महात्मानो युद्धदर्शनकाङ्क्षया ।
ऋषयश्च महात्मानो लोके ब्रह्मर्षिसत्तमाः ।
समेत्य चोचुः सहितास्तेऽन्योन्यं पुण्यकर्मणः ।
स्वस्ति गोब्राह्मणेभ्योऽस्तु लोकानां ये हि संगताः ।
जयतां राघवो युद्धे पौलस्त्यान्रजनीचरान् । [5]
चक्रहस्तो यथा युद्धे सर्वानसुरपुंगवान् ।

[For this, cf. 3.22.26–28. —(l. 1) Dg1 समीयुश् ; G1.2 समेताश् ( for समेयुश् ). Dm1 D8 चारणैस्तत्र ( for च महात्मानो ). Dg1 om. (hapl.) from the post. half of l. 1 to the prior half of l. 2. D4 T G1.2 -कांक्षिणः ( for -काङ्क्षया ). —G2 M1 om. l. 2–6. —(l. 3) D4 T2 G1 अन्योन्यं ( for तेऽन्योन्यं ). D4 पुण्यकर्मिणः. —(l. 4) Dt1 D4.6 T1.2 G1 M3 Cmp.k.t स्वस्ति गोब्राह्मणानां च; D8 M2 स्वस्ति गोब्राह्मणेभ्यस्तु; Cm as above ( for the prior half ). Dg1 T3 Cr.m.g.k.t येभि-; Dt1 D6 G1 M3 चेति; T2 ये च ( for ये हि ). Dt1 D6 संस्थिताः ( for संगताः ). M2 लोकास्तिष्ठंतु शाश्वताः ( for the post. half ). —(l. 6) G1 स तु हस्तो (sic) ( for चक्र° ).]

—Thereafter Dm1 D8 G3 cont. :

421* एतच्चान्यच्च बहवो ब्रुवाणाः परमर्षयः ।
जातकौतूहलास्तत्र विमानस्थाश्च देवताः ।
ददृशुर्वाहिनीं तेषां राक्षसानां गतायुषाम् ।
[(l. 1) = 3.22.29$^{ab}$.
—(l. 2) = 406*.
—(l. 3) = 3.22.29$^{cd}$.]

—$^{c}$) Ś1 Ñ1 Dm1 D2.3.8 G2.3 M1 -संतप्ता ( for -संत्रस्ता ). —For 17$^{cd}$, Dg1 Dt1 D4.6 T G1 subst., while Dm1 D8 G3 ins. after 17 :

422* एवमुक्त्वा पुनः प्रोचुरालोक्य च परस्परम् ।

[Dg1 T2 आलोच्य ( for आलोक्य ). Dm1 D8 G3 राममालोक्य चापरे ( for the post. half ).]

18 $^{b}$) Ñ2 D5.7 राक्षसा भीमविक्रमाः. —$^{d}$) V1 करिष्यति ( for भविष्यति ). —After 18, Ś1 Ñ V B D2.3.5.7 M3 (l. 1–2 only) ins.; while M2 ins. after l. 6 of 424* :

423* रामो नो विदितो योऽयं यथा च वसुधां गतः ।
मानुषत्वं तु मत्वास्य कारुण्याद्व्यथितं मनः ।
नर्दन्तीव चमूस्तेषां रक्षसां कामरूपिणाम् ।
नानाविकृतवेषाणां रामाश्रममुपागमत् ।
तिष्ठ राम हतोऽसीति क्रोशन्तस्ते समन्ततः । [5]
अभिपेतुः सुसंरब्धा राक्षसा बलदर्पिताः ।
नानाप्रहरणा घोरा आह्वयन्राघवं रणे ।
अभिगम्य सुसंरब्धा सर्वतः पर्यवारयन् ।
विप्रकीर्णां तु तां दृष्ट्वा राक्षसानां महाचमूम् ।
शाठ्याद्राक्षसबुध्या च स खरः संन्यवर्तयत् । [10]
संनिवृत्तं तु तत्सैन्यमेकस्थमभवत्तदा ।
पिण्डितं मेघसंकाशं यथा यूथं द्विपायिनाम् ।

[M2 om. l. 1–2. —(l. 1) V2 B4 [ऽ]पि; B1 न ( for नो ). Ś1 Ñ1 D2.3 कामं नो विदितं; B2 रामो निवेदितो; M3 कामं हि विदितो ( for रामो नो विदितो ). V1 युद्धे ( for योऽयं ). V1 युद्धार्थं; B2 तथा च ( for यथा च ). Ñ1 D3 बहुधा ( for वसुधां ). —(l. 2) G(ed.) मनुष्यत्वं. V1 B4 च ( for तु ). M3 नो मत्वा ( for मत्वास्य ). M3 वात्सल्याद् ( for कारुण्याद् ). V1 M3 व्यथते मनः. Ś1 D2 मानुषीं हि तनुं कृत्वा स्नेहान्नो विक्लवं मनः; Ñ1 D3 मानुषेति( D3 °षोसि ) ततः( D3 मतिं ) कृत्वा स्नेहात्कापुरुषं मनः. —After l. 2, Ś1 D2.3 ins. :

423(A)* इति चिन्तयतां तेषां रामे च युधि संस्थिते ।;

while B3 repeats l. 2–4 of 419* and then cont. :

423(B)* ततस्तु सिद्धाः सगणाः सहाप्सराः
सुवर्षे मे च स* * * * * * * ।
जयोऽस्तु रामस्य रणे महात्मनो
व्रजन्तु नाशं रिपवश्च संयुगे ।

—Thereafter Ñ1 B3.4 D3 read an addl. colophon. [*Sarga name* : Ñ1 प्रत्ययानिकः; B3 गुहाप्रवेशः; B4 सीतागुहाप्रवेशः; D3 रामाश्रमगमनः. —*Sarga no.* ( figures, words or both ) : Ñ1 B3 om.; B4 31; D3 33.]

—(l. 3) Ś1 नर्दंती हि; Ñ1 नर्दतां तु; Ñ2 नृत्यंतीव; V1 नर्दंती च; D2 नर्दंतीति; D5 नर्दंतीव; M2 नदते च; L(ed.) नदंती हि ( for नर्दन्तीव ). Ñ1 ततः ( for चमूस् ). Ś1 D2.3 भीमकर्मणां; Ñ1 पीनवक्षसां; M2 क्रूरकर्मणां ( for कामरूपिणाम् ). —(l. 4) D2 रामाश्रयम् ( for °श्रमम् ). Ś1 Ñ1 D2 उपाद्रवत् ; B4 उपागता. B1 राघवाश्रममागमत् ; M2 संनद्धानां तरस्विनां ( for the post. half ). —After l. 4, V2 ins. ( mostly illeg. ) :

423(C)* * * * * * * * * * * * * * समाययुः ।

—M2 om. l. 5. —(l. 5) D2 रिपो ( for तिष्ठ ). Ñ1 हे राम तिष्ठ रामेति ( for the prior half ). Ś1 Ñ1 D2.3 दृप्ता विकृतदर्शनाः ( for the post. half ). —(l. 6) M2 सुसंक्रुद्धा ( for °रब्धा ). Ś1 Ñ1 D2 विम( D2 °न )र्दमाना वसुधां शून्ये( Ñ1 °न्य ) विश्रब्धमागताः; D3 विनर्दमाना बहुधा शून्ये विश्रंभमागते. —After l. 6, B3 ins. :

423(D)* क रामः क च तद्भ्राता तत्र देवमुदीरयन् । (sic)

—B1 om. l. 7–8. —(l. 7) B2.3 आहूय ( for आह्वयन् ). Ś1 Ñ1 V1 D2.3 ततस्ते रामम( Ś1 राक्षसा; V1 राघवा )श्रमे; M2 आह्वयंतो नृपात्मजं; L(ed.) ततस्ते राघवाश्रमं ( for the post. half ). —V1 om. l. 8. —(l. 8) D5 अभिगम्य तु ( for अभिगम्य सु- ). Ś1 Ñ1 D2.3 अभिपेतुरभि( D2 °ति )क्रुद्धाः सर्वतः परिवार्य वै( D2 ते ). —(l. 9) M2 बहुधा राक्षसीं चमूं ( for the post. half ). Ś1 Ñ1 V1 D2.3 विप्रकीर्णां( Ñ1 V1 °र्णा )स्तु तान्दृष्ट्वा सु( V1 स )बहून्राक्षसर्षभान् . —(l. 10) Ś1 D2 साक्षाद् ; Ñ1 मौख्याद्; V1 सर्वान् ; M2 मौढ्याद् ( for शाठ्याद् ). Ś1 -संमुख्यः; Ñ1 -बुध्या तु; D2 -मुख्यश्च; L(ed.)-मुख्यांश्च ( for -बुध्या च ). Ñ2 om. स ( subm. ). V2 B4 M2 संन्यवर्तत; D3 संनिवर्तयन् ( for

ततो गम्भीरनिर्ह्रादं घोरवर्मायुधध्वजम् ।
अनीकं यातुधानानां समन्तात्प्रत्यदृश्यत ॥ १९
सिंहनादं विसृजतामन्योन्यमभिगर्जताम् ।
चापानि विस्फारयतां जृम्भतां चाप्यभीक्ष्णशः ॥ २०
विप्रघुष्टस्वनानां च दुन्दुभींश्चापि निघ्नताम् ।
तेषां सुतुमुलः शब्दः पूरयामास तद्वनम् ॥ २१
तेन शब्देन वित्रस्ताः श्वापदा वनचारिणः ।
दुद्रुवुर्यत्र निःशब्दं पृष्ठतो नावलोकयन् ॥ २२

G. 3. 30. 30
B. 3. 24. 31
L. 3. 29. 30

संन्यवर्तयत). N̐2 D5.7 खरः सैन्यं न्यवर्तयत् (for the post. half). —(l. 11) Ś1 संनिवर्त्य. V1 च (for तु). —(l. 12) N̐1 पीडितं (for पिण्डितं). Ś1 D2.3 ह्यभवत्सर्वं; M2 चाभवच्छीघ्रं (for मेघसंकाशं). Ś1 N̐1 D2.3 M2 यथा यूथो(N̐1 D3 M2 °थं; D2 °थाद्)विषाणिनां (for the post. half).];

while Dg1 Dt1 Dm1 D1.4.6.8 S (M3 after 423*) ins. after 18 :

424* इति राजर्षयः सिद्धाः सगणाश्च द्विजर्षभाः ।
जातकौतूहलास्तस्थुर्विमानस्थाश्च देवताः ।
आविष्टं तेजसा रामं संग्रामशिरसि स्थितम् ।
दृष्ट्वा सर्वाणि भूतानि भयाद्विव्यथिरे तदा ।
रूपमप्रतिमं तस्य रामस्याक्लिष्टकर्मणः ।   [5]
बभूव रूपं क्रुद्धस्य रुद्रस्येव पिनाकिनः ।
इति संभाष्यमाणे तु देवगन्धर्वचारणैः ।

[ (l. 1) G2 M सर्वे (for सिद्धाः). T2 संगताश् (for सगणाश्). M2.3 द्विजातयः (for द्विजर्षभाः). T3 इति देवगणाः सर्वे सिद्धाश्च द्विजपुंगवाः. —(l. 2) = 406*. M1 कृत- (for जात-). G2 M1 तत्र (for तस्थुर्). —D1 ins. l. 3–4 after 19; D4 T1 G1 M3 read l. 3–4 here for the first time, repeating them after 27. —(l. 3) D4 T1 M3 (second time) प्रविष्टं (for आ°). —(l. 4) Dm1 तं दृष्ट्वा सर्वभूतानि (for the prior half). D1.4 T1 G1 M3 (all except D1 second time) भयार्तानि (D4 °नि)प्रदुद्रुवुः(D1 °विव्यथुः) (for the post. half). —D1 om. l. 5-7. —(l. 5) T2 M1 रूपमप्रतिरूपस्य (M1 °पं च) (for the prior half). —(l. 6) G2 M रुद्रस्य क्रुद्धस्य (by transp.). Dg1 Dt1 D6 T3 M Cmp महात्मनः (for पिनाकिनः). —After l. 6, M2 ins. 423*. —G1.2 M om. l. 7. Dg1 reads l. 7 in marg. —(l. 7) Dm1 D8 स भाषमाणे; D4 T1.2 संभाषमाणे (for संभाष्य°).]

19 Dg1 transp. $19^{ab}$ and $19^{cd}$. D1 reads 19 (followed by l. 3–4 of 424*) after 27. —$^{a}$) Ś1 N̐1 V B तं तु; N̐2 D3.5.7 तत्तु (for ततो). N̐1 D3 -निर्घोषं (for -निर्ह्रादं). D1 ततस्तु भीमनिर्ह्रादं; D2 तं गंभीरविनिर्ह्रादं. —$^{b}$) D1 वर- (for घोर-). N̐1 B1.3.4 Dt1 D2.6–8 T1 -चर्म-; V D3 -कर्म- (for -वर्म-). —$^{d}$) V2 समदृश्यत; B1.2 पर्यदृश्यत; Dt1 D3.6 प्रत्य(D3 °ति)पद्यत (for प्रत्यदृश्यत). —After 19, B2–4 ins.; while M2 ins. after $24^{ab}$ :

425* मेघजालमिवायान्तं सविद्युत्पांशुवर्षिणम् ।
शीघ्रवातेरितमिव रक्षः सैन्यमदृश्यत ।

[ (l. 1) B2 M2 -रूपितं (for -वर्षिणम्). —(l. 2) B3 शीघ्रं.]

20 D1 om. 20–24. —$^{a}$) Ś1 N̐1 V1 B1 D2.3 M1 वीरना(D3 M1 °वा)दान्; V2 B2–4 वीरस्वनं(B4 °नान्); Dg1 सिंहनादान्; Dt1 D6 वीरालापान्; Dm1 D8 T3 G2.3 विरावांस्तान् (for सिंहनादं). N̐2 D5.7 वीरस्वनानुत्सृजतां. —$^{b}$) Ś1 N̐1 D2.3 अभिधावतां; Dt1 D6 T3 Ct °गच्छतां (for °गर्जताम्). N̐2 V B D5.7 गर्जतां(B2.3 °र्जितं) चाप्यभीक्ष्णशः. —$^{c}$) G1 चापांश्च (for चापानि). D4.5.7 चा(D4 *)स्फारयतां (for विस्फार°). —$^{d}$) Dg1 जृंभणं; Dm1 D8 G3 गर्जतां (for जृम्भतां). M2.3 अपि (for चापि). N̐2 V B1–3 D5.7 मुहुर्मुहुः; B4 Ck.tp पुनः पुनः (for [अ]प्यभीक्ष्णशः). G3 गर्जतानां च भीक्ष्णशः (sic).

21 D1 om. 21 (cf. v.l. 20). —$^{a}$) Dg1 Dm1 D8 T3 G1 विप्रहृष्ट-(Dg1 °ष्टः); M3 Ck(also as in text) °क्रुष्ट- (for विप्रघुष्ट-). M2 विकृष्टं हसतां चैव. —$^{b}$) Dg1 Dt1 Dm1 D4.6.8 T1.2 M1 दुंदुभी(D4.6.8 °भि; T1.2 M1 °भीं)-श्चाभि-(Dg1 Dt1 D4 °पि); T3 घोरदुंदुभि-; G2 M2.3 दुंदुभीनां च (for °भींश्चापि). —For $21^{ab}$, Ś1 N̐1 D2.3 subst. :

426* प्रघुष्टं हसमानानां गर्जतां चाभिधावताम् ।

[ D2 प्रहृष्टैर्भसमानानां (for the prior half). Ś1 तर्जतां (for गर्जतां). N̐1 D3 चातिमात्रतः.];

while N̐2 V B D5.7 subst. for $21^{ab}$ :

427* विकृतं संप्रहसतामन्योन्यमभिगर्जताम् ।

[ V1 B2.3 विकृष्टं सं-; V2 विक्रोशतां; B1.4 विकृष्टानां (for विकृतं सं-).]

—$^{c}$) Ś1 N̐1 V2 स तुमुलः; B1 अत्युल्बणो; Dg1 T3 G1 M3 स विपुलः; Dt1 Dm1 D6.8 G2 M2 सुविपुलः; D5 तु तुमुलः; G3 तु विपुलः; M1 सुविपुलं (for सुतुमुलः). N̐2 V B D5.7 M2.3 नादः (for शब्दः).

22 D1 om. 22 (cf. v.l. 20). —$^{a}$) N̐2 V2 B D5.7 नादेन (for शब्देन). G1 संत्रस्ताः (for वित्रस्ताः). —$^{b}$) Ś1 N̐1 D2.3 तापसा; Dt1 D6 त्रासिता (for श्वापदा). Ś1 बलचारिणः (sic) (for वन°). —After $22^{ab}$, B2 reads $24^{cd}$ for the first time, repeating it in its proper place. —$^{c}$) Dm1 D3.4.8 T G M1 निःशब्दाः (for निःशब्दं). N̐2 V1 B D5.8 बहुधा बहवो यांतः(V1 जग्मुः); V2 बहुधा बहु धावंतः. —$^{d}$) Ś1 V1 B4 T3 G3 M1 पृष्ठतो न व्य(V1 वाव)लोकयन्; D3 तापसाश्च व्यलोडयन्. —After 22, Ś1 N̐ V B D2.3.5.7 ins., while M2 cont. after 429* :

428* अभवन्निष्प्रभः सूर्यस्तिमिरेण च संवृतः ।
मारुतः प्रतिकूलश्च राक्षसानां ववौ तदा ।

G. 3. 30. 32
B. 3. 24. 31
L. 3. 29. 32

तत्त्वनीकं महावेगं रामं समुपसर्पत ।
धृतनानाप्रहरणं गम्भीरं सागरोपमम् ॥ २३
रामोऽपि चारयंश्चक्षुः सर्वतो रणपण्डितः ।
ददर्श खरसैन्यं तद्युद्धाभिमुखमुद्यतम् ॥ २४
वितत्य च धनुर्भीमं तूण्याश्चोद्धृत्य सायकान् ।
क्रोधमाहारयत्तीव्रं वधार्थं सर्वरक्षसाम् ॥ २५
दुष्प्रेक्ष्यः सोऽभवत्क्रुद्धो युगान्ताग्निरिव ज्वलन् ।
तं दृष्ट्वा तेजसाविष्टं प्राव्यथन्वनदेवताः ॥ २६
तस्य क्रुद्धस्य रूपं तु रामस्य ददृशे तदा ।
दक्षस्येव क्रतुं हन्तुमुद्यतस्य पिनाकिनः ॥ २७

## इति श्रीरामायणे अरण्यकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

[ (l. 1) Ś1 Ñ1 D2.3 समावृतः; B3 सुसंवृतः; M2 [ अ ]भिसंवृतः; G(ed.) [ ए ]व संवृतः (for च संवृतः). —(l. 2) Ś1 Ñ1 D2.3 अभूत (for ववौ). ]

23 D1 om. 23 (cf. v.l. 20). —[a]) Ñ2 V B D5.7 G2 M1.2 तद् (V1 °दा)नीकं; Dt1 Dm1 D6.8 तच्चानीकं (for तत्त्वनीकं). Ñ1 महाबाहुं; Dg1 °घोरं (for °वेगं). —[b]) Ś1 Ñ1 D2.3 रामं (Ś1 °मे) समुपचक्रमे; Ñ2 V B D5.7 उपासर्पत राघवं; Dt1 Dm1 D6.8 रामं समनुवर्तत; G1.2 M1 राघवं समसर्पत; Cg as in text. —D6 om. 23[c]–24[b]. —[c]) Ś1 D2 वृतं नानाप्रहरणैर्. —[d]) Ś1 Ñ B D2.3.5.7 M2 वर्धमानार्णवोपमं. —After 23, M2 ins.:

429* तिष्ठ राम हतोऽसीति क्रोशमानाः समन्ततः ।
अभिपत्य सुसंक्रुद्धाः सर्वतः परिवारयन् ।
तत्तु सागरसंकाशं घोराणां पिशिताशिनाम् ।
राममाह्वयतां संख्ये सेनानीकमधिष्ठत ।
सिंहनादं विसृजतां तिष्ठ तिष्ठेति भाषताम् । [5]
चापानि विस्फारयतां क्ष्वेलतां हसतामपि ।
असिशूलान्भ्रमयतां गर्जतां क्रोशतामपि ।
तेषां शब्दः स सुमहान्पूरयामास तद्वनम् ।
उत्पेतुश्चैव नादेन श्वापदाश्च वयांसि च ।
क्रव्यादानि च घोराणि ज्ञात्वा तं राक्षसाधमम् । [10]

—Thereafter M2 cont. 428* and then further cont.:

430* तेऽहीनवेगाः सहसा राममेकं जिघांसवः ।
नानायुधधराः सर्वे वर्धमानार्णवोपमाः ।

24 D1 om. 24 (cf. v.l. 20); D6 om. 24[ab] (cf. v.l. 23). —[a]) Ñ1 D2 विहरंश्; Dg1 Dm1 D8 चालयंश् (for चारयंश्). Ś1 D3 रामो हि (D3 °पि) विहरन्स्वक्षः; G3 रामो विचालयंश्चक्षुः. —B2 repeats here 24[cd] (cf. v.l. 22). —[c]) Dg1 M3 स (for तद्). —[d]) D1 उच्छ्रितं; Cg उत्थितम् (for उद्यतम्). Ś1 Ñ1 D2.3 समंताद्युद्धकांक्षिणं; Dg1 G2 M3 त (G2 य)द्युद्धाभिमुखोद्यतं (Dg1 °मं); Dt1 D6 T3 G3 युद्धायाभिमुखो गतः (T3 G3 °द्यतं). —For 24, Ñ2 V B D5.7 M2 subst.:

431* ततो ददर्श काकुत्स्थो रक्षःसैन्यमुपागतम् ।
सर्वतश्चारयंश्चक्षुर्युद्धाभिमुखमात्मनः ।

[ (l. 1) M2 तद्ददर्श ततो रामः (for the prior half). V1 B1 M2 खर- (for रक्षः-). —(l. 2) M2 युद्धायाभिमुखात्मनः (for the post. half). ]

25 [a]) D3 विकृष्य; G1 विनाम्य (for वितत्य). Ś1 Ñ1 D2.3 विनाम्य च (Ś1 विनाम्यैव; D2 विनम्य च; D3 सुधन्वानो) धनुर्घोरं; Ñ2 V B D5.7 G(ed.) विगृह्य (V1 विधृत्य; B1–3 विसृज्य; G[ed.] निगृह्य) पाणिना चापं; M2 वितत्य तु धनुर्दिव्यं. —[b]) Ś1 Ñ V B D1–3.5.7 M2 तूणाद्‌ (D1 °च्चो)द्धृत्य; Dg1 Dm1 G3 Cg तूण्योश्चो°; T1 तूण्यां चो°; T2 तूण्यामुधृत्य (for तूण्याश्चोद्धृत्य). Ñ2 D5.7 M2 सायकं (for सायकान्). —[c]) M2 चापि (for तीव्रं). —For 25[cd], Ñ2 V B D5.7 subst.:

432* बभूवावस्थितो योद्धुं ज्यास्वनैः पूरयन्दिशः ।
हसन्निव स्थितः श्रीमान्पुरस्तात्सर्वरक्षसाम् ।

[ (l. 1) B2 रामो (for योद्धुं). V1 स्वनैरा- (for ज्यास्वनैः). —(l. 2) V B1.3 एव (for इव). D5 [ आ ]स्थितः (for स्थितः). V1 एव (for सर्व-). ]

26 D1 om. 26. —[a]) Dg1 Dt1 Dm1 D3.6.8 च (for सो). Ś1 D2.3 क्रोधाद्; Ñ1 दीप्त्या (for क्रुद्धो). Ñ2 V B D5.7 पुनश्च रोषदुष्प्रेक्ष्यो. —[b]) G2.3 [ उ ]ज्ज्वलन्; M2 [ उ ]त्थितः (for ज्वलन्). D3 रामो ह्यग्निरिवोज्ज्वलन्. —[c]) Ñ2 V B D5.7 युक्तं; Dg1 विद्धं (for [ आ ]विष्टं). D3 तं दृष्ट्वा सहसोद्विग्ना. —[d]) Ś1 Ñ V B D2.3.5.7 M2.3 विव्यथुर्; Dg1 Dm1 D4.8 T G1.2 M1 Ck प्राद्रवन्; Ct as in text (for प्राव्यथन्). Ś1 Ñ1 D2.3 नैरृतर्षभाः (for वनदेवताः).

27 Ś1 Ñ1 D2.3 om. 27[ab]. Ñ2 V B D5.7 transp. 27[ab] and 27[cd]. —[ab]) Ñ2 V B D5–7 तस्य रुष्टस्य; D1 तथा क्रुद्धस्य; M2 क्रुद्धस्य तस्य (by transp.) (for तस्य क्रुद्धस्य). Ñ2 V B D5.7 तु मुखं; Dg1 D1 रूपं तद्; G1 रूपं च (for रूपं तु). M3 रामस्य रूपं तु (by transp.) Ñ2 V1 B D5.7 T G1 ददृशुस्; D6 दृश्यते (for ददृशे). G(ed.)

# २४

अवष्टब्धधनुं रामं क्रुद्धं च रिपुघातिनम् ।
ददर्शाश्रममागम्य खरः सह पुरःसरैः ॥ १
तं दृष्ट्वा सगुणं चापमुद्यम्य खरनिःस्वनम् ।
रामस्याभिमुखं सूतं चोद्यतामित्यचोदयत् ॥ २
स खरस्याज्ञया सूतस्तुरगान्समचोदयत् ।
यत्र रामो महाबाहुरेको धुन्वन्धनुः स्थितः ॥ ३
तं तु निष्पतितं दृष्ट्वा सर्वे ते रजनीचराः ।
नर्दमाना महानादं सचिवाः पर्यवारयन् ॥ ४

G. 3. 31. 4
B. 3. 25 4
L. 3. 30. 4

तथा ( for तदा ). —After $27^{ab}$, Ñ2 V B1.4 D5.7 ins. a passage relegated to App. I ( No. 5 ); while B2.3 ins. it after 27. —$^{c}$ ) D1 च ( for [ इ ]व ).—$^{d}$ ) Dm1 D8 G3 M1 क्रुद्धस्येव ( for उद्यतस्य ). D1 कपर्दिनः ( for पिनाकिनः ). Ñ1 V B D5.7 उद्यतास्त्रं पिनाकिनं. ❀ Cv : दक्षस्येत्यादौ प्रथम एवकारो द्रष्टव्यः । दक्षस्येव क्रतुं हन्तुमुद्यतस्य पिनाकिन इति च पाठः. ❀ —After 27, D1 reads 19 followed by l. 3–4 of 424*. —After 27, Ś1 Ñ1 D2.3 M2 ins. a passage relagated to App. I ( No. 6 ), D4 T1 G1 M3 repeat l. 3–4 of 424* after 27. —Dg1 Dt1 Dm1 D1.4.6.8 T G M1.3 ins. after 27, while M2 ins. after App. I ( No. 6 ) :

433* तत्कार्मुकैराभरणैर्ध्वजैश्च
तैर्वर्मभिश्चाग्निसमानवर्णैः ।
बभूव सैन्यं पिशिताशनानां
सूर्योदये नीलमिवाभ्रजालम् ।

[ ( l. 1 ) G3 आभरण- ( for °रणैर् ). Dt1 D6 रथैश् ; T3 तैस्तैश् ( sic ) ( for ध्वजैश् ). —( l. 2 ) Dt1 D6 तद् ( for तैर् ). Dm1 D8 G3 वाजिभिश् ( for वर्मभिश् ). T3 ध्वजैश्च शूरैर्विविधैश्च वर्मभिः. —( l. 3 ) M3 वर्णं ( for सैन्यं ). D1 बभौ तु सैन्यं युधि नैर्ऋतानां. —( l. 4 ) D1 नाक्तम् ( for नीलम् ). Dm1 [ अ ]भ्रराजिः; D4 T1 G1.2 M3 °वृंदं; D8 °रातिः ( for [ अ ]भ्रजालम् ). T3 नील इवाभ्रराशिः. ]

Colophon. D2 om. —*Sarga name* : Ś1 खरसैन्यस्तंभः; Ñ1 सैन्यभंगः; Ñ2 सैन्यनिर्याणं; V B खरसैन्यदर्शनं; D1 राक्षसाभ्युपगमः; D3 रामाभ्युपगमनं; D5.7 खरसैन्यनिर्याणं. —*Sarga no.* ( figures, words or both ) : Ś1 Ñ1 B1.3 om.; Ñ2 D5.7 30; V1 29; V2 30; B2 31; B4 32; Dg1 Dt1 Dm1 D4.6.8 T G M1 24; D1 27; D3 34; M2.3 25. —After colophon, G concludes with श्रीरामाय नमः.

## 24

D2 cont. the previous Sarga. D8 begins with ॐ; T2 M1 begin with श्रीरामाय नमः.

1 For 1–4, D1 subst. 438*. —$^{a}$ ) Dt1 M2 ( after corr. *sec. m.* as in text ) अवष्टभ्य. Ñ1 D3 ततो( D3 तु तं ) दृष्ट्वा ( for -धनुं रामं ). Ś1 D2 अवित्रस्तं( D2 अतस्तब्धं ) तु तं दृष्ट्वा; Ñ1 D3 अवष्टब्धं ततो( D3 तु तं ) दृष्ट्वा. —$^{b}$) Ś1 Ñ1 D2.3 राघवं; D6 क्रुद्धं तं ( for क्रुद्धं च ). ❀ Cv : अवष्टब्धधनुरिति । धनुःशब्दमुकारांतं लिंगानुशासिनः साधु मन्यंते ।; Cm : धनुःशब्द उकारांतोप्यस्ति ।; Cg : धन्यत इति धनुः । धन धान्ये इत्यस्माद्धातोः भृमृशीतॄमस्जिभ्य उः इत्यौणादिकसूत्रेण उ प्रत्ययः । धनुषां च धनुं विदुः, धनुरिवाजनि वक्रः इति काव्यप्रयोगाच्च ।; Ck : उकारांतोप्यस्ति धनुःशब्द इत्यादावेवोक्तं ।; Ct : उकारांतोपि धनुःशब्दो धनुर्वाचकः. ❀ —For $1^{ab}$, Ñ2 V B D5.7 subst. :

434* अवध्यं सर्वभूतानां राममक्लिष्टकारिणम् ।

[ B2 -सैन्यानां ( for -भूतानां ). ]

—$^{c}$ ) V1 आगत्य ( for °म्य ). —$^{d}$ ) Ñ1 सिंह- ( sic ) ( for सह ). Ś1 D2.3 G M3 -पुरःसरः; Ñ2 V B D7 निशाचरैः; D5 -निशाचरः ( for पुरःसरैः ). —After 1, Ñ2 V B4 D5.7 ins. :

435* स दृष्ट्वा राममेवैकं राक्षसः क्रोधमूर्छितः ।

2 For 1–4, D1 subst. 438*. V om. $2^{ab}$. —$^{a}$ ) D4 सशरं ( for सगुणं ). —$^{b}$ ) Dm1 D8 G3 -निः( Dm1 नि )स्वनः ( for °नम् ). —For $2^{ab}$, Ś1 Ñ B D2.3.5.7 G2 M subst. :

436* तं दृष्ट्वा द्विगुणं क्रुद्धश्चापमुद्यम्य सज्जयन् ।

[ Ś1 D2 M1 सत्व( M1 °स्व )रः; Ñ1 D3 G2 M2.3 सस्वनं; B3 संहरन् ( for सज्जयन् ). ]

—$^{c}$ ) Ñ2 V B D5.7 राघव- ( for रामस्य ). Ś1 B1 D3 सूत ( for °तं ). —$^{d}$ ) Ś1 Ñ1 D2.3 चोदयस्वेत्युवाच ह; Ñ2 V2 B D5.7 M2.3 याहि याही( M2.3 चोदयस्वे )त्यचोदयत् ; V1 याहि याहीति चाब्रवीत् ; G1 चोदयामास राक्षसः.

3 For 1–4, D1 subst. 438*. T3 om. ( hapl. ) $3^{ab}$. —$^{a}$ ) Ñ2 V B D7 तु तस्य ( for खरस्य ). D5 स तु तस्या रुपा सूतः ( sic ). —$^{b}$ ) Ś1 Ñ1 D2.3 तानचोदयत्; V2 समनोदयत् ( for समचो° ). —$^{d}$ ) Dg1 D4 T1.2 G1.3 M3 स्थितो धनुः ( by transp. ). Ś1 Ñ1 एकस्तु धन्वते धनुः; D2 एकस्तद्धुनुते धनुः; D3 करस्थं धन्वते धनुः; T3 धुन्वन्नेको धनुः स्थितः; M2 युद्धायावस्थितोभवत् . —For $3^{cd}$, Ñ2 V B D5.7 subst. :

437* ते ययुः शीघ्रगास्तूर्णं यत्र दाशरथिः स्थितः ।

4 $^{a}$ ) B1.3 निष्पादि( B3 °ति )तं; D2 निपतितं ( for निष्पतितं ). Ś1 तं तु निष्क्रांतमालक्ष्य. —$^{b}$ ) Dg1 Dt1 D6 T3 सर्वतो; T2 सर्वे च ( for सर्वे ते ).Ś1 Ñ1 D2.3 राघवं रिपुघातिनं. —$^{c}$ ) Dt1 Dm1 D6.8 मुंचमानाः; D3 नर्दमानं

G. 3. 31. 5
B. 3. 25. 5
L. 3. 30. 5

स तेषां यातुधानानां मध्ये रथगतः खरः ।
बभूव मध्ये ताराणां लोहिताङ्ग इवोदितः ॥ ५
ततस्तं भीमधन्वानं क्रुद्धाः सर्वे निशाचराः ।
रामं नानाविधैः शस्त्रैरभ्यवर्षन्त दुर्जयम् ॥ ६
मुद्गरैरायसैः शूलैः प्रासैः खड्गैः परश्वधैः ।
राक्षसाः समरे रामं निजघ्नू रोषतत्पराः ॥ ७
ते बलाहकसंकाशा महानादा महाबलाः ।
अभ्यधावन्त काकुत्स्थं रामं युद्धे जिघांसवः ॥ ८
ते रामे शरवर्षाणि व्यसृजन्रक्षसां गणाः ।
शैलेन्द्रमिव धाराभिर्वर्षमाणा महाघनाः ॥ ९
स तैः परिवृतो घोरै राघवो रक्षसां गणैः ।
तिथिष्विव महादेवो वृतः पारिषदां गणैः ॥ १०
तानि मुक्तानि शस्त्राणि यातुधानैः स राघवः ।
प्रतिजग्राह विशिखैर्नद्योघानिव सागरः ॥ ११

(for नर्दमाना). Ñ1 V1 B1.2 D2.3 -नादान् (for -नादं). Ś1 नंदमाना महानादाः. —T2 om. (hapl.) from 4$^d$ up to महानादं in the prior half of l. 2 of 439*. —$^d$) D2 ध्वजिनः; M3 सहिताः (for सचिवाः). —For 1–4, D1 subst. :

438* ततस्तद्रक्षसां सैन्यं महानादं महास्वनम् ।
दुदर्श रामः समरे खरं चोत्तमतेजसम् ।
(3.27.11) { तं रथस्थं धनुष्पाणिं पौरुषे पर्यवस्थितम् ।
ददृशुः सर्वभूतानि पाशहस्तमिवान्तकम् ।

**5** T2 om. 5 (cf. v.l. 4). —$^b$) D2 मध्यं (for मध्ये). —Dg1 reads 5$^d$ in marg. —$^d$) Ś1 Ñ V B D1–3.5.7 ग्रहः; Dg1 T3 [ उ ]द्यतः; Dt1 [ उ ]द्गतः; Dm1 D4.8 G3 M2.3 [ उ ]त्थितः; D6 [ उ ]द्भूतः (for [ उ ]दितः). —After 5, Dg1 Dt1 Dm1 D4.6.8 T1.3 G M ins. :

439* ततः शरसहस्रेण राममप्रतिमौजसम् ।
अर्दयित्वा महानादं ननाद समरे खरः ।

[ (l. 1) G3 रामं प्रति महौजसं (for the post. half). —(l. 2) D4.6 G2.3 M अर्द( D6 आर्द; M3 अर्च )यित्वा. ]

**6** $^a$) Ñ2 V B D5.7 भीमकर्माणं; G1 अभिधुन्वानं (for भीमधन्वानं). Ś1 Ñ1 D1–3 ततस्ते क्रूर( D1 भीम )कर्माणः. —$^b$) Ñ2 V1 B2–4 D5.7 क्रुद्धं; D1 क्रूराः (for क्रुद्धाः). —$^c$) Ñ2 V B D5.7 शस्त्रै( Ñ2 D5.7 शरै )र्नानाविधाकारैर् . —$^d$) Ś1 Ñ2 V B D1.5.7 अभ्यवर्षन् (for °र्षन्त). Ś1 सुदुर्जयं; Ñ2 V B D5.7 सुदुर्जयाः; D1 महाबलं (for दुर्जयम्).

**7** $^a$) D4 T1 पट्टसैः; T3 आयुधैश्च (for आयसैः). D1 तखरैरायसैः प्नासैः (corrupt). —$^b$) Ñ2 V B D5.7 प्रासखड्ग-( Ñ2 °ड्गैः ); D1 खड्गैः शूलैः; G1 खड्गैः प्रासैः (by transp.) (for प्रासैः खड्गैः). —$^c$) Dt1 D6 शूरं; M3 राजन् (for रामं). —$^d$) D1 विव्यधुः (for निजघ्नू). Ñ1 द्रोह- (for रोष-). Ś1 D2 तीव्रविक्रमं; Ñ2 V B D5.7 M2.3 क्रोधमूर्छिताः; D3 तीक्ष्णविक्रमाः (for रोषतत्पराः).

**8** $^a$) D1 वारिधार- (for बलाहक-). —$^b$) B3 Dg1 Dt1 Dm1 D6.8 T2.3 G3 महाकाया (for °नादा). Ñ2 V B D4.5.7 T1 G1.2 M महौजसः; D1 महारथाः (for महाबलाः). —$^c$) Ś1 Ñ1 D1–3 अभ्यवर्षंत (for °धावन्त). —After 8$^c$, Dg1 Dt1 Dm1 D4.6.8 S ins. :

440* रथैर्वाजिभिरेव च ।
गजैः पर्वतकूटाभैः.

[ (l. 1) M3 आहवे (for एव च). ]

—$^d$) Ś1 Ñ V B D1–3.5.7 M2.3 यातुधाना; M1 रामं युधि (for रामं युद्धे). D1 वधैषिणः; M2 युयुत्सवः (for जिघांसवः).

**9** $^a$) Ś1 D2 रामं; D1 दृढं (for रामे). G2 दश (sic); G3 M2 शस्त्र- (for शर-). —$^b$) Ś1 संसृज्य; Ñ1 ववृष्ट (sic); D2.3.5.7 ससृजू( D5.7 °जुः ) (for व्यसृजन्). Ñ2 V2 B2–4 ससृजुः सुमहाबलाः; V1 B1 D1 विसृजंतो( D1 °सा [ sic ]) महाबलाः. —$^{cd}$) B1 देवेंद्रम्; B4 शैलेंद्र (for शैलेन्द्रम्). D4 T1 बलाहकाः (for महाघनाः). Ñ2 V B D5.7 प्रववर्षुः पयोधराः (for $^d$). D1 राममेवाभ्यवर्तंत सूर्यमभ्रघना इव.

**10** T3 om. 10. V1 repeats 10$^{ab}$ after 441*. —$^a$) Dt1 Dm1 D4.6.8 G2.3 M1 सर्वैः (for स तैः). Dt1 Dm1 D6.8 T2 G2.3 M1 रामो (for घोरै). D1 रामः स तैः परिवृतः. —$^b$) Ś1 Ñ1 V1( second time ) D2.3 काकुत्स्थो; Ñ2 V1 ( first time ).2 B1.3.4 D5.7 राक्षसैर् (for राघवो). Ñ2 V1 ( first time ).2 B1.3.4 D5.7 नृवरात्मजः (for रक्षसां गणैः). B2 भिन्नगात्रो न विव्यथे; Dt1 Dm1 D6.8 राक्षसैः क्रूरदर्शनैः; T2 G2.3 M1 राक्षसैर्घोरदर्शनैः. ❀ Cg : स तैरित्याद्यर्धमेकान्वयम्. ❀ —After 10$^{ab}$, V1 ins. :

441* आकाश इव घर्मान्ते बभौ नीलाभ्रसंवृतः ।

—Dg1 D4 T1 om. (hapl.) 10$^{cd}$. —$^{cd}$) Ś1 D2 ऋषिभिश्च; Dm1 D8 G3 घोररूपैर्; D3 तिष्ठन्निव; T2 गंधेष्विव (for तिथिष्विव). Ś1 M2.3 परिषदां (for पारि°). Ñ1 D3 G3 संवृतः पा( Ñ1 प )र्षदां गणैः (for $^d$). D1 महापरिषदैर्घोरै-र्महादेव इवेश्वरः. ❀ Ct : पारिषदां नुडभाव आर्षः. ❀ —For 10$^{cd}$, Ñ2 V B D5.7 subst. :

442* महादेवः पितृवने गणैः पार्श्वगतैरिव ।

**11** $^a$) Ñ2 V B D5.7 तेषां (for तानि). Ś1 D2 युक्तानि (for मु°). M3 शस्त्राणि मुक्तानि (by transp.) (for मुक्तानि शस्त्राणि). —$^b$) Ñ2 V B D5.7 राक्षसानां (for यातुधानैः). D1 समंततः; M2.3 सहस्रशः (for स राघवः). Ś1 Ñ1 D2.3 समंतात्तैर्निशाचरैः. —$^c$) Ś1 Ñ1 D2.3 M2 काकुत्स्थो; D1 धर्मात्मा; M1 तोयौघं (for विशिखैर्). Ñ2 V B D5.7 स्रोतांसि प्रतिजग्राह. —$^d$) Ñ2 V B D5.7 M1 नदीनामिव (for नद्योघानिव). Ś1 Ñ1 D2.3 नदीवेगानिवोदधिः.

स तैः प्रहरणैर्घोरैर्भिन्नगात्रो न विव्यथे ।
रामः प्रदीप्तैर्बहुभिर्वज्रैरिव महाचलः ॥ १२
स विद्धः क्षतजादिग्धः सर्वगात्रेषु राघवः ।
बभूव रामः संध्याभ्रैर्दिवाकर इवावृतः ॥ १३
विषेदुर्देवगन्धर्वाः सिद्धाश्च परमर्षयः ।
एकं सहस्रैर्बहुभिस्तदा दृष्ट्वा समावृतम् ॥ १४
ततो रामः सुसंक्रुद्धो मण्डलीकृतकार्मुकः ।
ससर्ज निशितान्बाणाञ्शतशोऽथ सहस्रशः ॥ १५
दुरावारान्दुर्विषहान्कालपाशोपमान्रणे ।
मुमोच लीलया रामः कङ्कपत्रानजिह्मगान् ॥ १६
ते शराः शत्रुसैन्येषु मुक्ता रामेण लीलया ।
आददू रक्षसां प्राणान्पाशाः कालकृता इव ॥ १७
भित्त्वा राक्षसदेहांस्तांस्ते शरा रुधिराप्लुताः ।
अन्तरिक्षगता रेजुर्दीप्ताग्निसमतेजसः ॥ १८
असंख्येयास्तु रामस्य सायकाश्चापमण्डलात् ।
विनिष्पेतुरतीवोग्रा रक्षःप्राणापहारिणः ॥ १९

G. 3. 31. 19
B. 3. 25. 21
L. 3. 30. 19

12 [a]) B2 परिवृतो घोरैर्; D1 घोरैः प्रहरणैर् (by transp.) (for प्रहरणैर्घोरैर्). —[b]) Ś1 भिन्नगात्रैर्. —[c]) Ñ1 स तैः (for रामः). V1 प्रवृत्तैर् (for प्रदीप्तैर्). M3 संप्रदीप्तैर्बहुविधैर्. —[d]) Ś1 Ñ1 D2.3 महीधरः; Ñ2 V1 B4 Dm1 D1.7 महाबलः; V2 यथाचलः (for महाचलः).

13 [ab]) D2 क्षतजाविष्टः; M1 क्षतजैर्दिग्धः (for °जादिग्धः). D1 तप्तहेमपरिच्छदः (for [b]). Ñ2 V B D5.7 स दिग्धः सर्वतो रामः शोणितेन व्यराजत. —[cd]) M1 [उ]दितः (for [आ]वृतः). D1 प्रबभौ राघवः श्रीमानशोक इव पुष्पितः. —For 13[cd], Ś1 Ñ V B D2.3.5.7 subst.:

443* दिवाकर इवाकाशे संध्याभ्रैर्बहुभिर्वृतः ।

—After 13, M2 ins.:

444* रामः सुतीक्ष्णैर्बहुभिर्नानाप्रहरणैः शितैः ।
निशाचरैरर्दितोऽपि न चकम्पे न विव्यथे ।
स शोणितपरीताङ्गो गिरिर्गैरिकधातुमान् ।

14 [ab]) Dg1 निषेदुर् (for वि°). Ś1 Ñ V B2-4 D2.3.5.7 सह चारणैः; B1 स * * * * (for परमर्षयः). D1 विषेदुः सर्वभूतानि दृष्ट्वा रामं महौजसं. —[c]) V1 B1 एवं (for एकं). D1 सपत्नैर् (for सहस्रैर्). —[d]) V2 मुदा; B1 M2.3 तथा (for तदा). Ś1 Ñ1 D2.3 दृष्ट्वा रामं; D1 क्रुद्धैः क्रूरैः (for तदा दृष्ट्वा).

15 [ab]) D6 G2 M1 तु (for सु-). Ś1 Ñ2 V B D2.3.5.7 M2.3 ततो(Ś1 D2.3 अथ) रामो महातेजाः (for [a]). Ñ1 अथ रामो महातेजाः शतशोथ सहस्रशः; D1 ततः शक्रायुधाकारं तद्विकृष्य महद्धनुः. —[c]) Ñ2 V B D5.7 मुमोच (for ससर्ज). Ś1 D2 G1.2 विविधान्; Dg1 D4 G3 M1.3 विशिखान् (for निशितान्). M3 घोरान् (for बाणान्). D1 विसृजद्विशिखान्रामः. —[d]) Ñ1 तेषु रक्षःस्वशेषतः; Ñ2 V B D5.7 वज्राणीव शतक्रतुः.

16 [a]) Ś1 Ñ2 V B D1-3.5-8 M2 दुराधर्षान्(Ñ2 D5 °वर्षान्; B2 D2 °धरान्; D6 °हारान्; D8 °चारान्; M2 °वरान्); T2 दूरगातान् (for दुरावारान्). M3 दुष्प्रसहान् (for दुर्विषहान्). —[b]) Dg1 Lm1 D4.8 T G1.3 M1 Cg कालदंडोप(T1 °डस)मान् (for कालपाशो°). —[c]) Dt1 D6 बंक- (for रामः). Ś1 Ñ1 D2.3 क्षिप्र(Ñ1 पर)मायस्तश्(D3 °स्तान्); Ñ2 V B D5.7 बहुधा रामः; D1 रामो नाराचान् (for लीलया रामः). —[d]) M1 -पत्रानि(after corr. *sec. m.* as in text). Ś1 Ñ V B D1-3.5.7 M2.3 शरा(D1 शिता)-न्कनक(Ś1 Ñ1 D1-3 M3 कांचन)भूषणान्(B2.3 °षितान्); Dt1 D6 -पत्रान्कांचनभूषणान्.

17 [a]) Ś1 खर- (for शत्रु-). D1 -सैन्यानां (for °न्येषु). —[b]) D1 संयुगे (for लीलया). Ñ2 V B1 D5.7 वि(B1 नि)-सृष्टाः कंकपत्रिणः. —[c]) Ś1 Ñ1 D2.3 आददुः(Ś1 °धुः) समरे प्राणान्(Ś1 सद्यः); D1 आहर्तुं निशितान्प्राणान्. —D4 om. 17[d]-19[b]. —[d]) G2 काले (for काल-). Ś1 Ñ1 D2.3 कालपाश इवोद्यताः; Ñ2 V B D5.7 शापा इव तपस्विनां; D1 गरुडः फणिनामिव. —After 17, D1 ins.:

445* शरा विमुक्ता रामेण विधूमा हेमभूषणाः ।
विविशुर्ज्वलिता घोरा महोल्का इव खे तदा ।

18 D1 om. 18-19; D4 om. 18 (cf. v.l. 17). —[a]) Ś1 Ñ V B D2.3.7 ते (for तांस्). —[b]) Ś1 Ñ V B D2.3.7 शरा रुधिर(V1 कनक)भू(B1.2.4 D3 रू)षिताः. —[c]) V1 B D7 अंतरीक्ष- (for °रिक्ष-). —[d]) Ñ2 B3 D5.7.8 दावा(D8 काला)ग्नि- (for दीप्ताग्नि-). M2 दीप्ता इव हुताशनाः. —After 18, Ñ2 V B D5.7 ins.:

446* ततः शरसहस्राणि मुमोच रघुनन्दनः ।
सूदयन्नग्निसंकाशान्समन्ताद्रजनीचरान् ।

[(l. 2) Ñ2 D5.7 गिरि-; V B4 अद्रि- (for अग्नि-).]

19 D1 om. 19; D4 om. 19[ab] (cf. v.l. 18 and 17 respy.). —[a]) D5 असंख्येण(sic) (for °यास्). Ś1 D2 T1 च; B D5.7 हि (for तु). —[c]) Ś1 Ñ B D2.3.7 महावेगा (for अतीवोग्रा). —[d]) Ś1 Ñ1 रक्षसां प्राणहारिणः; Ñ2 B1-3 राक्षसानां प्रहारिणः. —V D5 subst. l. 1 for 19[cd] and then cont., while Ñ2 B D7 ins. after 19:

447* विनिष्पेतुरसंबद्धाः केचित्तत्र शिलीमुखाः ।
निर्भिद्य राक्षसान्भीमानविशन्त रसातलम् ।
कविद्धागनिकृत्तानि शिरांसि पतितानि रणे ।
स्फुरन्त्याकुञ्चितोष्ठानि गां गतानि सहस्रशः ।
रामचापविनिर्मुक्तैः सायकैः रुधिराशनैः । [5]
निकृत्ता राक्षसाः पेतुर्बहवोऽथ सहस्रशः ।

G. 3. 31. 23
B. 3. 25. 21
L. 3. 30. 20

तैर्धनूंषि ध्वजाग्राणि वर्माणि च शिरांसि च ।
बाहून्सहस्ताभरणानूरून्करिकरोपमान् ।
चिच्छेद रामः समरे शतशोऽथ सहस्रशः ॥ २०

ततो नालीकनाराचैस्तीक्ष्णाग्रैश्च विकर्णिभिः ।
भीममार्तस्वरं चक्रुर्भिद्यमाना निशाचराः ॥ २१
तत्सैन्यं निशितैर्बाणैरर्दितं मर्मभेदिभिः ।
रामेण न सुखं लेभे शुष्कं वनमिवाग्निना ॥ २२

राक्षसा भिन्नमर्माङ्गा राघवेण महात्मना ।
मुमुचुः सहिताः प्राणान्गच्छन्तस्ते परां गतिम् ।

[ D7 om. l. 1. —(l. 1) Ñ2 V D5 असंबद्धाः; B4 °नद्धाः (for °वृद्धाः). —(l. 2) Ñ2 D5.7 सर्वान् (for भीमान्). Ñ2 D5.7 प्राविशंत; B2.3 प्रविशंतो (for अविशन्त). —(l. 3) B3 केचिद् (for क°). B2 केषांचिद्बाणकृत्तानि (for the prior half). —(l. 5) V B2 -विमुक्तैस्तु (V2 °श्च) (for -विनिर्मुक्तैः). —(l. 6) V B रक्षतां (for राक्षसाः). Ñ2 D5.7 शतशो (for बहवो). —(l. 7) Ñ2 D5.7 -सर्वांगा; B1.2 -मर्माणि; B3 -मर्मज्ञा (for -मर्माङ्गा). ]

—After 19, D4 T1 ins.; G1 ins. after $20^{ab}$; M2.3 ins. after l. 3 of 452*; while D1 subst. for $20^{cd}$ and reads after $20^{ef}$:

448* ते रणे साङ्गदान्बाहून्सहस्ताभरणान्भुजान् ।

[ G1 सुहस्त- (for स°). D1 तथा; M2 शुभान् (for भुजान्). ]

—Thereafter, G1 reads l. 3 of 453*, while D1 cont.:

449* छित्वा छित्वा विनिष्पेतुः शरा रामस्य रक्षसाम् ।

20 $^{a}$) D1 बाणैर्धनुर; D4 T1 धनूंषि च (for तैर्धनूंषि). Ñ2 V B D5.7 तेषां ध्वजाग्राणि समं. ❀ Cg: तैरित्याद्यर्धमेकं वाक्यं. ❀ —$^{b}$) Ñ2 V B D5.7 धनूंषि (for वर्माणि). Ñ2 D5.7 रुचिराणि; V B कवचानि; D4 च शिलानि (sic) (for च शिरांसि). Ś1 Ñ1 Dt1 D2.3.6.8 M2 Ck.t चर्माणि कवचानि च; Dm1 वर्माणि कवचानि च. —After $20^{ab}$, D4 T1 G3 ins. l. 3 of 452*, G1 ins. 448*. —Ś1 Ñ1 D2.3 om. $20^{cd}$. —$^{c}$) D4 बहून् (for बा°). —For $20^{cd}$, Ñ2 V B D5.7 subst.:

450* बाहूंश्चैव महाबाहुश्चिच्छेद बहुधा शरैः ।

[ Ñ2 D5.7 बहुभिः (for बहुधा). ];

while D1 subst. 448* for $20^{cd}$ and reads it after $20^{ef}$. —Ñ2 V B D5.7 om. $20^{ef}$. —$^{e}$) Ś1 Ñ1 D2 रामः सहसा; M2 समरे रामः (by transp.) (for रामः समरे). M2 reads $20^{ef}$ twice. —After 20, Ś1 Ñ1 D2.3 ins.:

451* राक्षसानां तथा बाहून्सहस्ताभरणान्बहून् ।
उद्यतान्सायुधान्युद्धे चिच्छिदू रामसायकाः ।;

[ (l. 2) Ñ1 रामश्चिच्छेद सायकैः (for the post. half). ] while Dg1 Dt1 Dm1 D4.6.8 T G M1.2 ins. after 20; M3 ins. after $20^{ab}$:

452* हयान्काञ्चनसंनाहान्रथयुक्तान्ससारथीन् ।
गजांश्च सगजारोहान्सहयान्सादिनस्तदा ।
चिच्छिदुर्बिभिदुश्चैव रामबाणा गुणच्युताः ।
पदातीन्समरे हत्वा अनयद्यमसादनम् ।

[ (l. 1) D4 -संपन्नान् (for -संनाहान्). —(l. 2) Dt1 सहायान् (for सहयान्). Dg1 S तथा (for तदा). Dt1 (also) समरे शतशो हयान् (for the post. half). —M1 om. l. 3. D4 T1 G3 read l. 3 after $20^{ab}$. —M3 transp. l. 3 and 4. —(l. 3) D4 T1 G3 [अ]पि (for [ए]व). D4 T1 M3 -चाप- (for -बाणा). —After l. 3, M2.3 ins. 448*. —(l. 4) Note hiatus between the two halves. Dm1 D4 S ह्यनयद् (to avoid hiatus). ]

21 $^{a}$) M2 तथा (for ततो). —$^{b}$) G3 तीक्ष्णैश्चैव (for तीक्ष्णाग्रैश्च). V1 तीक्ष्णाग्रैस्त्वरिकर्णिकैः. —$^{c}$) D1 रामेण (for भीमम्). D2 -स्वनं (for -स्वरं). —$^{d}$) Ñ2 V B Dt1 Dm1 D1.5–7 छिद्यमाना (for भिद्यमाना). —After 21, Ñ2 V B D5.7 ins.:

453* केचिद्बाणप्रवेगैस्तु निर्भिन्नकवचा रणे ।
उच्चैर्गगनमाविश्य ततोऽगच्छन्रसातलम् ।
महाद्रिशिखराकारानञ्जनाचलसंनिभान् ।
खेचरान्पातयामास राक्षसान्धरणीतले ।
रामचापविनिर्मुक्ताः सायका राक्षसेश्वरान् । [5]
भित्त्वा भित्त्वाथ वेगेन प्राविशन्धरणीतलम् ।

[ (l. 1) Ñ2 B1 D7 विभिन्न-; D5 विच्छिन्न- (for निर्भिन्न-). —(l. 2) V उच्चैर्गगनमाश्रित्य; B1 अन्ये दानवमाविध्य (for the prior half). —G1 reads l. 3 after 448*. —(l. 3) B4 शूरानचल- (for अञ्जना°). —(l. 4) B1 खचरान् (for खे°). Ñ2 D7 पातयामासुः (for °मास). —(l. 6) B2.3 च (for [अ]थ). V1 धरणीतले. ]

☞ B2 is a fragmentary MS. breaking off from st. 22.

22 $^{a}$) D3 सर्वं (for सैन्यं). Dt1 D6 T1 विविधैर् (for निशितैर्). —$^{b}$) G2 मर्दितं (for अ°). D1 वज्र- (for मर्म-). Ś1 -वेदिभिः; D1 -निःस्वनैः (for -भेदिभिः). —$^{c}$) Dt1 Dm1 D6.8 न रामेण (by transp.). —$^{d}$) Ñ2 V1 B1.3.4 D5.7 M2 दह्यमानम्; D2 भुक्तं वनम्; D3 दग्धं वनम्; D4 शुष्क°; G2 M1 महावनम् (for शुष्कं वनम्). —After 22, Ñ2 V B1.3.4 D1.5.7 ins.:

454* ततो निहतभूयिष्ठं शूरराक्षससूदितम् ।
तद्बलं राक्षसेन्द्रस्य राघवेण शितैः शरैः ।
राक्षसा बलसम्पन्ना बहुधा बहवो रणे ।
महानिद्रावशं नीता लीलया राघवेण तु ।

केचिद्भीमबलाः शूराः शूलान्खड्गान्परश्वधान् ।
चिक्षिपुः परमक्रुद्धा रामाय रजनीचराः ॥ २३
तानि बाणैर्महाबाहुः शस्त्राण्यावार्य राघवः ।
जहार समरे प्राणांश्चिच्छेद च शिरोधरान् ॥ २४
अवशिष्टाश्च ये तत्र विषण्णाश्च निशाचराः ।
खरमेवाभ्यधावन्त शरणार्थं शरार्दिताः ॥ २५

G. 3. 31. 31
B. 3. 25. 30
L. 3. 30. 29

[ (l. 1) B1 निहित-; B3.4 [ ऽ ]भिहत- ( for निहत- ). —(l. 3) V1 बहवो बहुधा ( by transp. ). —(l. 4) V1 ते ( for तु ). ]

23 D1 om. 23. Ñ2 V B1.3.4 D5.7 read 23 after 27. —[a]) Ś1 Ñ1 D2.3 ते शूलशक्ति( Ñ1 शक्तिशूल [ by transp. ] )परिघान्; Ñ2 V B1.3.4 D5.7 M2.3 ते गृहीत्वा शिताञ्शूलान्. —[b]) Ś1 B1 Dt1 D2.3.6 T2 G1 M2.3 प्रासान्; Ñ1 V B3 D5.7 प्रास-( V1 कुंत- ) ( for शूलान् ). Ñ V B1.2 D2.5.7 -खड्ग-; Dg1 Dm1 D8 T3 G2.3 M1 चैव; Dt1 D6 शूलान् ( for खड्गान् ). —For 23[cd], Dg1 Dm1 D8 T G M1 subst. :

455* रामस्याभिमुखं गत्वा चिक्षिपुः परमायुधान् ।
[ Dm1 D8 G3 M1 स्थित्वा ( for गत्वा ). ]

—After 23, D3 M2( l. 1–2 only ) ins., while Ś1 Ñ1 D2 subst. for 24–25 :

456* तच्छस्त्रवर्षं सुमहद्विमुक्तं रजनीचरैः ।
असंभ्रान्तो रणे रामः प्रतिजग्राह वीर्यवान् ।
प्रतिगृह्य च तद्वर्षं निमीलित इवाभवत् ।
तेषां बाणैः सुनिशितैराददे रघुनन्दनः ।
शिरांसि बाहून्सासींश्च विमलांश्च परश्वधान् । [ 5 ]
हस्तान्सहस्ताभरणान्धनूंषि कवचानि च ।
समग्रदेहैर्निहतैर्निशाचरैः
शिरोभिरुद्भासिकिरीटकुण्डलैः ।
भुजैर्भुजङ्गप्रतिमैश्च साङ्गदै-
र्विचित्रघोरास्तरणेव भूर्बभौ । [ 10 ]
ततस्तु रामस्य शरास्तजीविता
निशाचरा संप्रतिपेतुरर्दिताः ।
विसृज्य शस्त्राण्यपरे विदुद्रुवुः
समीक्ष्य रामस्य पराक्रमं रणे ।

[ (l. 2) Ñ1 वने ( for रणे ). Ñ1 परिजग्राह ( for प्रति° ). —(l. 3) D2.3 तु ( for च ). D2 सर्वं ( for वर्षं ). —Ñ1 om. l. 7–10. —(l. 10) Ś1 D2 विचित्रिता तत्र रणे बभूव भूः( Ś1 बभूवतुः ). —(l. 11) Ñ1 शरात्तु जीविनो; D2 शरात्तपीडिता; D3 शरात्तजीविता ( for शरास्तजीविता ). —(l. 12) D3 निशाचराः संप्रति ते भृशार्दिताः. —(l. 13) D2 विसृष्टशस्त्रास्तु ( for विसृज्य शस्त्राणि ). —(l. 14) D3 महत् ( for रणे ). ]

—Thereafter Ś1 Ñ1 D2.3 read a colophon. [ —*Sarga name* : Ś1 Ñ1 D2.3 खरसैन्यभंगः. —*Sarga no.* : Ś1 Ñ1 D2 om.; D3 35. ]

24 For subst. in Ś1 Ñ1 D2, cf. v.l. 456*. D3 om. 24. —[a]) Dt1 D1.6 G1 M2.3 तेषां ( for तानि ). G1 युधि ( for बाणैर् ). M1 महावेगैश् ( for महाबाहुः ). —[b]) D1 बाणान् ( for शस्त्राणि ). Dt1 [ आ ]वा * ( for [ आ ]वार्य ). Dt1 D6 वीर्यवान् ( for राघवः ). —For 24[ab], Ñ2 V B1.3.4 D5.7 subst. :

457* तेषां नानायुधान्याशु बाणैश्छित्वा तु खण्डशः ।
[ V1 B4 तानि ( for नाना- ). V1 [ अ ]थ ( for तु ). ]

—[c]) M2 रामश् ( for प्राणांश् ). —[d]) Ñ2 V B1.4 D5.7 रक्षसां राघवः शरैः( B4 °नैः ); B3 राघवो रक्षसां शरैः. —After 24, Ñ2 V B1.3.4 D5.7 ins. :

458* क्रीडन्निव महाबाहुश्चरन्राक्षसमण्डले ।
चकर्त तरसा वीरो बाहूंश्चैव शिरांसि च ।
ततो हलहलाशब्दः पुनः कलकलो महान् ।
महाराक्षसनादस्तु पुनस्तूर्यरवो महान् ।
आयुधानां च निर्घोषो रथानां च महास्वनः । [ 5 ]
सिंहनादश्च दृप्तानां पूरयन्वै नभस्तलम् ।
वर्धते दिक्षु सर्वासु प्रविष्टश्च रसातलम् ।
ततस्तद्राक्षसं सैन्यं खरदूषणसंश्रयम् ।
अभ्यधावत्पुनस्तत्र राघवं रघुनन्दनम् ।

[ (l. 3) B1 च कलहो ( for कलकलो ). —B3 om. ( hapl. ) l. 4. —B4 transp. l. 4 and 5. —(l. 5) B1.3.4 निष्पेषो ( for निर्घोषो ). —(l. 6) Ñ2 D5.7 हृष्टानां; B4 शूराणां ( for दृप्तानां ). B2.3 च ( for वै ). ]

—Then B3.4 read 28[ab], while Dg1 Dt1 Dm1 D1.3.4.6.8 S ins. after 24 :

459* ते छिन्नशिरसः पेतुश्छिन्नवर्मशरासनाः ।
सुपर्णवातविक्षिप्ता जगत्यां पादपा यथा ।

[ (l. 1) Dt1 M3 तत्; D4 T2.3 तैश् ( for ते ). M2 -शिरसा (sic) ( for °सः ). D4 -पक्ष-; T1 -चर्म- ( for -वर्म- ). G3 -शिरोधराः ( for -शरासनाः ). —(l. 2) Dm1 D8 G3 -पक्ष-; D1 -वायु- ( for -वात- ). D1 -निक्षिप्ता ( for -वि° ). T2 धरण्यां ( for जगत्यां ). Dt1 D4 -[ आ ]युधाः; D1.3 M2 इव ( for यथा ). ]

25 [a]) Ñ2 B1.3.4 D1.7 तु ( for च ). M2 ते ( for ये ). Ñ2 V B1.3.4 D5.7 के( D5 किं )चिद् ( for तत्र ). —[b]) Ñ2 V B1.3.4 Dm1 D1.3.5–7 M2.3 ते ( for च ). —[c]) V1 B1.3.4 [ अ ]भ्यपद्यंत; Dm1 D8 [ अ ]भ्यधावंतः; D1 M1.2 [ अ ]भ्यवर्तंत ( for °धावन्त ). —G2 om. ( hapl. ) 25[d]–27[c]. —[d]) Dt1 D1.6 शराहताः; D4 च शरार्दिताः ( hypm. ) ( for °र्दिताः ). Ñ2 V B1.3.4 D5.7 शरार्ताः शरणैषिणः. —For 24–25, Ś1 Ñ1 D2 subst. 456*. —After 25, Ñ2 V B1.3.4 D5.7 ins. :

460* ततस्तद्राक्षसं सैन्यं खरदूषणसंश्रितम् ।
बभूव पिण्डितं तत्र यथा यूथं द्विपायिनाम् ।
स तु दृष्ट्वा खरः सैन्यं रामसायकपीडितम् ।

G. 3. 31. 35
B. 3. 25. 31
L. 3. 31. 1

तान्सर्वान्पुनरादाय समाश्वास्य च दूषणः ।
अभ्यधावत काकुत्स्थं क्रुद्धो रुद्रमिवान्तकः ॥ २६
निवृत्तास्तु पुनः सर्वे दूषणाश्रयनिर्भयाः ।
राममेवाभ्यधावन्त सालतालशिलायुधाः ॥ २७
तद्बभूवाद्भुतं युद्धं तुमुलं रोमहर्षणम् ।
रामस्यास्य महाघोरं पुनस्तेषां च रक्षसाम् ॥ २८

## इति श्रीरामायणे अरण्यकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

उवाच शौर्यसम्पन्नं दूषणं भीमविक्रमम् ।
आश्वास्यतां बलं वीर उद्योगः क्रियतां च वै । [5]
अहं दाशरथिं रामं नयामि यमसादनम् ।

[ ( l. 1 ) B3 तथा ( for तदा ). B3 -मिश्रितं ( for -संश्रितम् ). —( l. 2 ) V1 B1.3 विषाणिनां ( for द्विपायिनाम् ). —( l. 4 ) B1 भीरु- ( sic ) ( for भीम- ). —( l. 5 ) Note hiatus between the two halves. —( l. 6 ) V1 अयं; B1.3 इमं ( for अहं ). ]

26 G2 om. 26 ( cf. v.l. 25 ). —$^{a}$ ) Dt1 Dm1 D4.6.8 T1.2 G3 धनुरादाय; D1 समुपादाय; M2 पुनराभाष्य ( for पुनरादाय ). V2 एतान्सर्वान्समादाय. —$^{b}$ ) Ñ2 V B1.3.4 D5.7 दूषणो दुरतिक्रमः( V B1.3 °मान् ).—After 26$^{ab}$, Ñ2 V B1.3.4 D5.7 ins. :

461* बहुविस्तरसंयुक्तमाश्वासयत राक्षसान् ।
तेजयित्वा च तत्सैन्यं समाश्वास्य च दूषणः ।

[ ( l. 1 ) B4 -विस्तारसंयुक्तान् ( for -विस्तरसंयुक्तम् ). —( l. 2 ) D7 योजयित्वा ( for तेज° ). V2 B1.4 तु ( for च ). Ñ2 B3 दूषणं. ]

—$^{c}$ ) D1 अभ्यवर्तत ( for अभ्यधावत ). Dt1 D6 अभ्यधावत्सु- ( D6 °स )संक्रुद्धः. —$^{d}$ ) Ñ1 M1 क्रुद्धं ( for क्रुद्धो ). Ś1 D2.3 T2 क्रुद्धः( T2 रुद्रं ) क्रुद्धमिवांतकं; Ñ2 V B1.3.4 D5.7 नमुचिर्वासवं यथा; Dg1 T3 M3 क्रूरकर्मा निशाचरः; D1 रामं क्रुद्ध इवांतकः; G1 क्रुद्धः क्रूर इवांतकः. ❀ Ct : क्रुद्धं रामं क्रुद्धोऽन्तक इवाभ्यधावत् . ❀

27 G2 om. up to 27$^{c}$ ( cf. v.l. 25 ). —$^{a}$ ) Ñ2 V B1.3.4 D5.7 राक्षसास्ते ( for निवृत्तास्तु ). Ś1 Ñ1 D2.3 अथ ते राक्षसा भूयो; D1 ते विशीर्णायुधाः सर्वे. —$^{b}$ ) D1 -[ आ ]श्रय- ( for °श्रय- ). Dm1 D8 -संश्रयाः; T3 Cm -संश्रिताः ( for -निर्भयाः ). —$^{c}$ ) Ñ1 D1 T3 [ अ ]भ्यवर्तंत; Dm1 D2.8 [ अ ]-भ्य( D2 [ आ ]शु )धावंतः ( for [ अ ]भ्यधावन्त ). —$^{d}$ ) Ñ2 V B1.3.4 D5.7 नानाप्रहरणा रणे. —After 27, Ñ2 V B1.3.4 D5.7 read 23. —After 27, Dg1 Dt1 Dm1 D4.6.8 S( M2 after 28 ) ins. :

462* शूलमुद्गरहस्ताश्च पाशहस्ता महाबलाः ।
सृजन्तः शरवर्षाणि शस्त्रवर्षाणि संयुगे ।
द्रुमवर्षाणि मुञ्चन्तः शिलावर्षाणि राक्षसाः ।

[ ( l. 1 ) Dg1 D4 T G3 M1 चाप- ( for पाश- ). —( l. 2 ) M1 शर- ( sic ) ( for शस्त्र- ). D4 damaged for शस्त्रवर्षाणि. ]

28 B3.4 read 28$^{ab}$ after 458*. —$^{a}$ ) D1 तदद्भुतं ( for तद्बभूव ). Ś1 Ñ1 D2.3 तदद्भुतमभूद्युद्धं. —$^{b}$ ) V B1.3.4 D1-3.5.7 लोम- ( for रोम- ). —After 28$^{ab}$, Ñ2 V B1.3.4 D5.7 ins. :

463* अवर्तत महाघोरं निशाचरविनाशनम् ।
ततो रामो महाबाहुः संधायास्त्रं महाबलम् ।
गान्धर्वं नाम विख्यातं मुमोचायतलोचनः ।
ततस्ते राक्षसास्तत्र गान्धर्वास्त्रेण मोहिताः ।
अयं रामस्त्वयं राम इति कालेन चोदिताः । [5]
अन्योन्यं समरे जघ्नुरुपेत्य परमायुधैः ।
ते विनिर्भिन्ननयना विनिवृत्तशिरोधराः ।
अपतन्राक्षसास्तत्र निकृत्ता इव पादपाः ।
ततोऽवशेषं तु तथैव राघवः
खरावशेषं क्षयदुर्बलं बली । [10]
जघान रामः स्थिरधर्मपौरुषो
रिपोर्बलं दुष्प्रतिवारणैः शरैः ।

[ ( l. 1 ) V -निषूदनं ( for -विनाशनम् ). —( l. 3 ) Ñ2 V1 गंधर्वं ( for गान्धर्वं ). —( l. 4 ) V B1 गंधर्व- ( for गान्धर्व- ). —( l. 5 ) V2 B4 मोहिताः ( for चोदिताः ). —( l. 6 ) B3 उत्पत्य ( for उपेत्य ). —( l. 7 ) Ñ2 B1 विनिर्भग्न- ( for °भिन्न- ). Ñ2 V2 B4 D7 विनिकृत्त-; V1 B3( also ) विनिर्भिन्न- ( for विनिवृत्त- ). —( l. 8 ) D7 निष्टेत्ता ( sic ) ( for निकृत्ता ). —( l. 10 ) Ñ2 D5.7 बलैर्; V1 वशी ( for बली ). —( l. 11 ) B1.3 स्थित- ( for स्थिर- ). Ñ2 D5.7 -मुष्टिसायकैर् ( for -धर्मपौरुषो ). —( l. 12 ) V2 B4 रक्षो- ( for रिपोर् ). Ñ2 D5.7 भयं च नेष्यन्मुनिसंघसंभवं. ]

—Ñ2 V B1.3.4 D5.7 om. 28$^{cd}$. —$^{c}$ ) D1.4 T1 G1.2 M1.3 च; M2 तु ( for [ अ ]स्य ). Ś1 Ñ1 D2.3 रामस्य च महाबाहोः. —After 28, M2 ins. 462* and thereafter cont.; while Dg1 Dt1 Dm1 D1.4.6.8 T G M1.3 ins. after 28 a passage relegated to App. I ( No. 7 ).

Colophon. —Ś1 Ñ1 D2.3.8 cont. the Sarga. —*Sarga name* : Ñ2 V B1.3.4 D5.7 खरसैन्यविध्वंसनं; D1 तुमुलं युद्धं. —*Sarga no.* ( figures, words or both ) : B1.3 om.; Ñ2 V2 D5.7 31; V1 30; B4 33; Dg1 Dt1 Dm1 D4.6.8 T G M1 25; D1 27; M2.3 26. —After colophon, G concludes with श्रीरामाय नमः.

☞ After Sarga 24, D1 ins. a passage ( a different version of 24 ) given in App. 1 ( No. 8 ).

का त्वं भवसि रुद्राणां मरुतां वा शुचिस्मिते ।
वसूनां वा वरारोहे देवता प्रतिभासि मे ॥ २६
नेह गच्छन्ति गन्धर्वा न देवा न च किंनराः ।
राक्षसानामयं वासः कथं नु त्वमिहागता ॥ २७
इह शाखामृगाः सिंहा द्वीपिव्याघ्रमृगास्तथा ।
ऋक्षास्तरक्षवः कङ्काः कथं तेभ्यो न बिभ्यसे ॥ २८
मदान्वितानां घोराणां कुञ्जराणां तरस्विनाम् ।
कथमेका महारण्ये न बिभेषि वरानने ॥ २९
कासि कस्य कुतश्च त्वं किंनिमित्तं च दण्डकान् ।
एका चरसि कल्याणि घोरान्राक्षससेवितान् ॥ ३०
इति प्रशस्ता वैदेही रावणेन दुरात्मना ।
द्विजातिवेषेण हि तं दृष्ट्वा रावणमागतम् ।
सर्वैरतिथिसत्कारैः पूजयामास मैथिली ॥ ३१
उपानीयासनं पूर्वं पाद्येनाभिनिमन्त्र्य च ।
अब्रवीत्सिद्धमित्येव तदा तं सौम्यदर्शनम् ॥ ३२

G. 3. 52. 51
B. 3. 46. 34
L. 3. 51. 30

[ (l. 1) D5 भूमिशय्यां (for °य्या-). B4 -परिक्षिता (for °ष्टा). Ñ2 D5.7 वन्य- (for वने). —(l. 2) V1 सुखवर्जिते; B3 शुभवर्जिता (for सुख°).]

26 Ñ1 T2 om. 26 (cf. v.l. 21 and 23 respy.) —[a]) G3 damaged for का त्वं भव. V1 चरसि (for भवसि). —[b]) T1 G2 M3 वरानने (for शुचिस्मिते). —[c]) Ś1 D1-3 G1 का वसूनां; V1 B1 वसूनां च (for वसूनां वा). —[d]) Ś1 Ñ2 V1 B3.4 D5.7 देवानां (for देवता). T3 G2.3 प्रतिभाति (for °सि). G2 मा (for मे). —After 26, Ñ2 V1 B1.3.4 D5.7 ins. :

865* एतासां देवतानां च का त्वं भवसि शोभने ।
गन्धर्वी वा महाभागे अप्सरा वा सुमध्यमे ।

[ (l. 1) Ñ2 B1 D5.7 तु (for च). —(l. 2) Note hiatus between the two halves.]

27 T2 om. 27[abc] (cf. v.l. 23). —[ab]) Ś1 Ñ1 V1 B1.3.4 Dm1 D1-3.7.8 T1 G [आ]गच्छंति (for गच्छ°). G3 damaged for धर्वा न देवा. Ś1 Ñ2 V1 B1.3.4 D2.5.7 मानुषाः (for किंनराः). D1 न च देवा न मानुषाः; D3 न देवासुरमानुषाः; D4 देवकिंनरदानवाः (for [b]). —[c]) B4 राक्षसीनाम् (for °सानाम्). Dm1 D8 G3 इमं वासं (for अयं वासः). Ś1 D1-3 रक्षसामयमावासः. —[d]) Ś1 B1 D2 च; Ñ2 D5.7 स्वित्; V1 B3 Dt1 D4.6 T3 तु; T2 सा (for नु). D1 कथं कर्तुम्; T1 कथय त्वम् (for कथं नु त्वम्). Ñ1 सुश्रोणि त * * * से (illeg.); D3 घोराणां कामरूपिणां (=23[d]).

28 G3 damaged from 28[a] up to बि in 28[d]. —[a]) Ñ2 V1 B1.3.4 D5.7 इमे (for इह). Ś1 D1.2 व्याला; D3 व्याघ्रा (for शाखा-). Ñ1 हिंस्रा (for सिंहा). —[b]) B4 व्याघ्रद्विप-; T1 M3 द्वीपि(M3 द्विपा)व्याघ्रा; T3 द्विपा व्याघ्र- (for द्वीपिव्याघ्र-). Dg1 T3 -वृकास्तथा; Dt1 D6 -मृगा वृकाः (for -मृगास्तथा). Ś1 D1.2 व्याघ्राश्च पृषत(D1 °ती; D2 °ता)-स्तथा; Ñ1 व्याघ्राः सिंहमृगादयः; Ñ2 B1.3 D5.7 व्याघ्रा द्वीपिमुखा(B1.3 °मृगा)स्तथा; V1 द्वीपिद्विपमृगादयः; D3 व्यालाश्च वृषभास्तथा. —[c]) Ś1 D1.2 येन्ये; V1 B1.3.4 कोकाः; D3 चान्ये; D4 T2 G1 M1.3 काकाः (for कङ्काः). Ñ1 हिंसका राक्षसाश्चैव; Ñ2 D5.7 ऋक्षास्तु शरभाः कोकाः (D7 °लाः). —[d]) M3 चैभ्यो (for तेभ्यो). Ñ2 V1 B4 D5.7 न ते भयं; B1.3 भयं न ते; Dg1 T1.3 न विभ्यसि (for न बिभ्यसे). Ś1 D1-3 तेभ्यस्त्वं न बिभेषि किं.

29 [a]) Ñ1 श्वापदानां च; M2 मदासितानां (for मदान्वितानां). Ś1 D1-3 घोराणां गिरिकल्पानां; Ñ2 V1 B1.3.4 D5.7 महतां(B3 °त्तानां) गिरिकल्पानां. —[b]) G3 damaged from स्विनां up to वरानने in [d]. M2 तथैव च (for तरस्विनाम्). —[c]) Ś1 D1-3 अस्मिन्; G1 om. (for एका). Ñ1 अरण्ये कथमेका त्वं. —[d]) Ñ2 V1 B1.3.4 D5.7 शुचिस्मिते (for वरानने).

30 [a]) D3 T2 सुता (for कुतश्). Ś1 D1.2 चासि; Ñ1 त्वं हि; Dg1 T3 त्वं च (by transp.); D3 वासि (for च त्वं). K(ed.) कुतश्चित्त्वं. —[b]) Ś1 Ñ V1 B1.3.4 D2.3.5.7 च दंडकं; D1 तदंतकं; G(ed.) च दंडके (for च दण्डकान्). —[c]) M2 चरति (for °सि). Ñ2 V1 B1.3.4 D5.7 एकाकिनी प्रविष्टासि; D1 घोराणि घोररूपाणि. —[d]) T2 घोर-; G(ed.) घोरे (for घोरान्). Ś1 Ñ V1 B1.3.4 D1-3.5.7 घोरं(Ś1 Ñ1 B1 °र) राक्षससेवितं(B1 °ते).

31 Ñ1 D1 om. 31-32. Ś1 D2.3 om. 31[ab]. —[b]) G3 रा * * * (damaged) (for रावणेन). Dt1 D6 महात्मना (for दुरा°). —For 31[ab], Ñ2 V1 B1.3.4 D5.7 subst. :

866* इत्यसौ रावणेनोक्ता दुष्टेन जनकात्मजा ।
अविश्वासभयात्तत्र शङ्किता पर्यसर्पत ।
विश्वासं पुनरागत्य ब्राह्मणेति सुमध्यमा ।
प्रत्युवाचानवद्याङ्गी रावणं भिक्षुरूपिणम् ।

[ (l. 2) V1 अविश्वासतया. D5.7 शंकंती (for शङ्किता).]

—[c]) Ś1 -वेशेन हि तं; Ñ2 V1 B1.3.4 D5.7 -रूपिणं सा(B4 चा)थ; M2 -वेषेण च तं; G(ed.) -दर्शनं साथ (for -वेषेण हि तं). —[d]) G(ed.) राक्षसम् (for रावणम्).

32 Ñ1 D1 om. 32 (cf. v.l. 31). —[a]) B1 Dt1 Dm1 T2 Cg उपनीय. G1 [आ]सने; G(ed.) [उ]दकं (for [आ]सनं). B3 रम्यं (for पूर्वं). Ś1 D2.3 उ(Ś1 त)पनीयासनं भद्रं; Ñ2 उपासीनां समं पूर्वं. —[b]) Ś1 [उ]पनिवेद्य; D2.3 [उ]पनिमंत्र्य (for [अ]भिनिमन्त्र्य). Ñ2 V1 B1.3.4 D5.7 व-

G. 3. 52. 0
B. 3. 46. 35
L. 3. 51. 31

द्विजातिवेषेण समीक्ष्य मैथिली
तमागतं पात्रकुसुम्भधारिणम् ।
अशक्यमुद्द्रष्टुमुपायदर्शना-
न्यमन्त्रयद्ब्राह्मणवद्यथागतम् ॥ ३३
इयं बृसी ब्राह्मण काममास्यता-
मिदं च पाद्यं प्रतिगृह्यतामिति ।
इदं च सिद्धं वनजातमुत्तमं
त्वदर्थमव्यग्रमिहोपभुज्यताम् ॥ ३४

निमन्त्र्यमाणः प्रतिपूर्णभाषिणीं
नरेन्द्रपत्नीं प्रसमीक्ष्य मैथिलीम् ।
प्रसह्य तस्या हरणे धृतं मनः
समर्पयामास वधाय रावणः ॥ ३५
ततः सुवेषं मृगयागतं पतिं
प्रतीक्षमाणा सहलक्ष्मणं तदा ।
निरीक्षमाणा हरितं ददर्श त-
न्महद्वनं नैव तु रामलक्ष्मणौ ॥ ३६

इति श्रीरामायणे अरण्यकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

( V1 अ )न्येनोपनिमंत्र्य च( Ñ2 D5.7 वै ). —$^c$ ) Ñ2 V1 B1.3.4 D3.5.7 G2.3 [ ए ]वं; Dm1 D8 [ ए ]तत् ( for [ ए ]व ). —$^d$ ) Ñ2 V1 B1.3.4 D2.3.5.7 तं पापं ( for तदा तं ). T2 M1.3 °दर्शना ( for सौम्यदर्शनम् ). Ś1 तां पापः सौम्यदर्शनां.

33 D2.3 om. 33. —$^a$ ) Ñ1 G1 च वीक्ष्य; D4 M3 हि वीक्ष्य ( for समीक्ष्य ). Ś1 D1 द्विजातिरूपे( D1 °वेषे )ण हि वीक्ष्य रावणं. —$^b$ ) Dg1 Dt1 D6 T Cg समागतं ( for तमा° ). D4 -कुडुंभ-; D6.8 -कुसुंब-; G1 -कुडुंब- ( for °म्भ- ). Ś1 शस्त्र-कुशांतपाणिनं; Ñ1 पात्रकु * * * * णं ( illeg. ); D1 दंडकुशां-बुधारिणं; G3 पा * * * भ° ( damaged ); M3 पात्रकमंडलुध्वजं ( for पात्रकुसुम्भधारिणम् ). —$^c$ ) D6 अवश्यम् ( for अश-क्यम् ). Ñ1 अन्वेष्टुम् ( for उद्द्रष्टुम् ). Ś1 Dm1 D4.8 T1.3 G M उ( T3 M3 Cv.r.m.g अ )पायदर्शनं; Dg1 °दर्शिनी; D1 T2 उदारदर्शनं; Cr*p* as in text ( for उपायदर्शनान् ). —$^d$ ) Dg1 Dm1 D8 T3 G1 तमंगना; Dt1 D6 Cr.k.t तथागतं; D4 M2 तदांगना; T1 G2 तथांगना; T2 तदानीं; G3 M1.3 तमा( M1 °दा )गतं ( for यथागतम् ). Ś1 Ñ1 D1 न्यमंत्रयद्ब्राह्मणमेव-मंगना. ❀ Ck : अशक्यमुद्द्रष्टुमुपायदर्शनान्यमन्त्रयद्ब्राह्मणवत्त-थागतमिति पाठः। Ct : तथागतं ब्राह्मणवेषेणागतं रावणं ब्राह्मणवदेव न्यमन्त्रयत्। पाठान्तरं त्वत्राशक्तकल्पितं. ❀

34 $^a$ ) Ñ1 D1 बृशीं; D2.3 बृषी ( for °सी ). Ñ1 साध्वि-हास्यतां ( for कामम° ). —$^b$ ) D1 तव ( for प्रति- ). Ś1 Ñ1 D1–3 त्वया ( for इति ). —$^c$ ) Ś1 Ñ1 D1–3 परमान्नम् ( for वनजातम् ). —$^d$ ) Ś1 अग्रे तद्; D1–3 अद्यं तद् ( for अव्यग्रम् ). D1–3 [ उ ]पयुज्यतां; D4 °भुंजतां ( for [ उ ]पभुज्यताम् ). —For 33–34, Ñ2 V1 B1.3.4 D5.7 subst. :

867* अथैवमुक्त्वा गजराजगामिनी
निमन्त्र्य पाद्येन च भोजनेन ।
तथाचचक्षे कुलमात्मनः शुभा
तथैव भर्तुः प्रथितात्मनो गुणान् ।

[ ( l. 1 ) B3 तथा ( for अथ ). Ñ2 V1 D5.7 द्विज-; B1 द्विप- ( for गज- ). —( l. 2 ) V1 पादेन ( for पाद्येन ). D5 तत्र ( unmetrical ) ( for च ). V1 D7 भोजनेन च. —( l. 3 ) B1.4 तदा ( for तथा ). B4 तदा ( for शुभा ). ]

35 D5 om. 35$^{ab}$. —$^a$ ) Ś1 Ñ2 B3 D1–3.7 निमंत्र( Ñ2 B3 °न्त्र्य )याणां परि-; Ñ1 V1 B4 °माणां परि-; B1 निमंत्रयंतीं परि-; D4 M3 न्यमंत्र( M3 °न्त्र्य )माणः प्रति- ( for निमन्त्र्यमाणः प्रति- ). D4 G3 -पूर्व- ( for -पूर्ण- ). —$^b$ ) Ñ2 V1 -पुत्रीं ( for -पत्नीं ). Ś1 D2 समवेक्ष्य; D3 प्रतिपूज्य ( for प्रसमीक्ष्य ). Ś1 Ñ B1.3.4 D1–3.7 रावणः ( for मैथिलीम् ). V1 प्रसमीक्ष्यमाणः ( for °मीक्ष्य मैथिलीम् ). —$^c$ ) Ś1 D1–3 दृढव्रतः; Ñ1 B1.3.4 D5.7 धृतव्रतः; V1 कृतव्रतः; Dg1 द्रुतं मनः; Dt1 D6 Ct दृढं मनः; T3 ध्रुवं मनः; Cg as in text ( for धृतं मनः ). T1.2 प्रसह्य तस्या हरणोद्यतं मनः. —$^d$ ) Dg1 Dm1( after corr. as in text ) D8 T G3 M3 समर्पयित्वात्म-( M3 °तु ); G1 °यद्वयात्म-; G2 °चात्म-; M1.2 °न्नात्म-; Cg K( ed. ) समार्पयत्स्वात्म- ( for °यामास ). Dg1 T3 M राक्षसः ( for रावणः ). ❀ Cv : समर्पयत् निहितवान्. ❀ Ś1 D1–3 शुभाननां तां( D2 °नाम् सा ) न तथाभ्यमन्यत( D3 °नंदत् ); Ñ1 सकाममात्मानमवेक्ष्य राक्षसः; Ñ2 V1 B1.3.4 D5.7 सकाममात्मानमसावमन्य( V1 °मंस्य )त.

36 $^a$ ) Ñ1 स तां ( for ततः ). D4 मृगयां ( for °या- ). —$^b$ ) Dg1 G3 M3 प्रतीक्ष्यमाणा; Dm1 D8 समीक्ष्यमाणा. —$^c$ ) Dg1 Dm1 D8 निरीक्ष्यमाणा; G1 सा वीक्ष°; G3 समीक्ष्य°; M1.3 Cv.r.g विवीक्ष° ( for निरीक्ष° ). Dg1 त्वरितं ( for हरितं ). D4 महद्वनं ( for ददर्श तन् ). Ñ1 समीक्ष्यमाणा रहितं तदा भृशं. —$^d$ ) D4 ददर्श तं; T2 महावनं ( for महद्वनं ). Ñ1 प्र * * ( illeg. ) कामः समरा भव तदा ( sic ). —For 36, Ś1 D1–3 subst. :

868* सा तं वरोरुर्मृगयागतं तदा
निरीक्ष्यमाणा सहलक्ष्मणं पतिम् ।
अजानती सा हरणं समन्ततो
महद्वनं प्रीतमना ददर्श ह ।

# ४५

रावणेन तु वैदेही तदा पृष्टा जिहीर्षुणा ।
परिव्राजकरूपेण शशंसात्मानमात्मना ॥ १
ब्राह्मणश्चातिथिश्चैष अनुक्तो हि शपेत माम् ।
इति ध्यात्वा मुहूर्तं तु सीता वचनमब्रवीत् ॥ २

दुहिता जनकस्याहं मैथिलस्य महात्मनः ।
सीता नाम्नास्मि भद्रं ते रामभार्या द्विजोत्तम ॥ ३
संवत्सरं चाध्युषिता राघवस्य निवेशने ।
भुञ्जाना मानुषान्भोगान्सर्वकामसमृद्धिनी ॥ ४

G. 3. 53. 3
B. 3. 47. 4
L. 3. 52. 4

[ (l. 1) D3 स तां वनांतं (for सा तं वरोरु). —(l. 3) D1.2 अज्ञातमाना (for अजानती सा). D3 निरीक्ष्यमाणो रहितं समंततो. —(l. 4) D3 बभूव सः (for ददर्श ह).];

while Ñ2 V1 B1.3.4 D5.7 subst. for 36 :

869* स तां वरोरुं मृगयागतं पतिं
प्रतीक्षमाणां सह लक्ष्मणेन ।
निरीक्षमाणो रहिते समन्ततो
महावने प्रीतमना बभूव ह ।

[ (l. 1) D5 वरोहां (for °रुं). D5.7 मृगयां (for °या-). —(l. 2) V1 B1.3.4 प्रतीक्ष्यमाणां. G(ed.) सह लक्ष्मणेन च. —(l. 3) V1 D5 निरीक्ष्यमाणो.]

Colophon.—*Sarga name* : Ś1 D1.2 रावणदर्शनं; Ñ1 सीतादर्शनं; Ñ2 D5.7 भिक्षुरूपधा(D5 °ध)रणं; V1 B3 रावणागमनं; D3 रावणवाक्यं; D8 सीताहरणं.—*Sarga no.* (figures, words or both) : Ś1 Ñ1 B1.3 D2 om.; Ñ2 D3.5.7 52; V1 51; B4 53; Dg1 Dt1 Dm1 D6.8 T G M1.2 46; D1 49; D4 48; M3 47.—After colophon, G concludes with श्रीरामाय नमः.

## 45

V2 illeg. up to 12[a] (cf. v.l. 3.39.1). D8 begins with ॐ; T2 with श्रीरामचन्द्राय नमः; M1 with श्रीरामाय नमः.

**1** G(ed.) om. 1[a]–2[b].—[a]) B3 [ए]व (for तु).—[b]) Ś1 Dg1 D1–4 G1 M2 तथा पृष्टा; Ñ2 B1.3.4 D5.7 पृष्टैवं सा; V1 ततो रंसा (corrupt); T2 यदा हृष्टा; G2 यथा पृष्ट्वा (sic) (for तदा पृष्टा). Ś1 D1–3 शुचिस्मिता; Ñ1 विवक्षता; Dg1 Dm1 D8 T3 G M1 Cg.k जिहीर्षता(Dm1 D8 °या); D4 M2.3 निरीक्ष्य तं; T1.2 जिहीर्षिता; Ct as in text (for °र्षुणा).—[c]) V1 B1.3.4 -वेशेन; Dg1 D4 T1.3 G1 M -लिंगेन (for -रूपेण).—[d]) Dg1 Dm1 D4.8 T3 G2.3 M अंगना; Ct as in text (for आत्मना).

**2** V2 illeg. for 2 (cf. v.l. 1). G(ed.) and L(ed.) om. 2[ab] (for G[ed.], cf. v.l. 1).—Note hiatus between [a] and [b].—[a]) D3 वा (for first च). Ñ1 Dm1 D3 T2 G1 M3 [ए]व; Dg1 D4 T3 G2.3 [ए]वं; M2 [अ]यं; Ct as in text (for [ए]ष).—[b]) Dm1 D8 ह्यनुक्तो (to avoid hiatus); G3 अनुक्ते (for अनुक्तो). ❀ Ck : एष अनुक्त इति छान्दसः संधिः ।; Ct also as in Ck. ❀ Ñ1 न; T1 [ऽ]पि- (for हि).—[c]) Dg1 मुहूर्ते (for °र्तं).—[d]) Ñ1 ततो रावणम् (for सीता वचनम्).—For 2, Ś1 Ñ2 V1 B1.3.4 D1.2.5.7 subst.; while D3 subst. l. 2 only for 2[cd] :

870* तदुक्तं मधुरं वाक्यं रावणेन वराङ्गना ।
अचिन्तयित्वा वैदेही ततो रावणमब्रवीत् ।

[ (l. 1) Ś1 D1.2 वरानना; B1 च संगता (for वराङ्गना).—(l. 2) Ś1 अर्चयित्वा तु; D3 विचिंतयित्वा (for अचिन्तयित्वा). Ś1 D1–3 तमुवाच दशाननं(D3 वरानना) (for the post. half).]

—Thereafter D3 cont. :

871* तृणमन्तरतः कृत्वा परपुंसः प्रभाषणे ।
न्यायतो धर्मशीला सा वक्तुं समुपचक्रमे ।

**3** V2 illeg. for 3 (cf. v.l. 1).—[c]) Ś1 D2 सीता ब्राह्मण; B3 Dg1 D5.7 G2 M1.2 सीता नामास्मि; D1.3 सीता नामेति; M3 नाम्ना सीतेति (for सीता नाम्नास्मि).—[d]) Ś1 Ñ V1 B1.3.4 D1–3.5.7 भार्या(Ś1 Ñ1 D1–3 पत्नी) रामस्य धीमतः; Dt1 D6 T1 रामस्य महिषी प्रिया(T1 द्विज).

**4** V2 illeg. for 4 (cf. v.l. 1). Ś1 repeats 4[ab] after 10.—[a]) B1.3 [अ]प्युषिता; B4 [अ]स्यु° (for [अ]ध्यु°). Ś1(both times) D1–3 उषित्वा द्वादशैवाहं; Ñ1 Dg1 Dt1 Dm1 D4.6.8 T G2.3 M Cg उषित्वा द्वादश समाः; G1 उष्य द्वादश वर्षाणि.—[b]) Ñ1 इक्ष्वाकोश्च; Dg1 Dt1 Dm1 D4.6.8 S Cg इक्ष्वाकूणां (for राघवस्य). Ś1(both times) D1–3 समाः श्वशुरवेश्मनि. ❀ Cr.k : सर्वकामसमृद्धिनि निवेशन इत्यन्वयः।; Cg : मानुषान् भोगान् रतिक्रीडाः, अग्राम्यत्वाय मानुषानित्युक्तम्। वस्तुतः स्वयं दिव्यभोगपरतया मानुषानित्यवशमुक्तवती। यद्वा मानुषान् मनुष्यत्वेनावतीर्णरामकृतान् भोगान्। अमानुषानिति वा छेदः। मनुष्यदुर्लभान्दिव्यान्भोगानित्यर्थः सर्वकामसमृद्धिनि इति सप्तम्यन्तपाठे सर्वकामसमृद्धिनि इक्ष्वाकूणां इक्ष्वाकुवंश्यस्य रामस्य। पूजायां बहुवचनम्। व्रीडया भर्तृनामाग्रहणम्। निवेशने गृहे। द्वादश समाः द्वादश वत्सरान्। अत्यन्तसंयोगे द्वितीया। अमानुषान्भोगान्भुञ्जाना अनुभवन्ती सती उषित्वा उषितवत्यस्मि। व्यत्ययेन क्त्वा प्रत्ययः. ❀

G. 3. 53. 4
B. 3. 47. 5
L. 3. 52. 5

ततः संवत्सरादूर्ध्वं सममन्यत मे पतिम् ।
अभिषेचयितुं रामं समेतो राजमन्त्रिभिः ॥ ५
तस्मिन्संभ्रियमाणे तु राघवस्याभिषेचने ।
कैकेयी नाम भर्तारं ममार्या याचते वरम् ॥ ६
प्रतिगृह्य तु कैकेयी श्वशुरं सुकृतेन मे ।
मम प्रव्राजनं भर्तुर्भरतस्याभिषेचनम् ।
द्वावयाचत भर्तारं सत्यसंधं नृपोत्तमम् ॥ ७
नाद्य भोक्ष्ये न च स्वप्स्ये न पास्येऽहं कदाचन ।
एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ॥ ८
इति ब्रुवाणां कैकेयीं श्वशुरो मे स मानदः ।
अयाचतार्थैरन्वर्थैर्न च याच्ञां चकार सा ॥ ९
मम भर्ता महातेजा वयसा पञ्चविंशकः ।
रामेति प्रथितो लोके गुणवान्सत्यवाक्शुचिः ।
विशालाक्षो महाबाहुः सर्वभूतहिते रतः ॥ १०

**5** V2 illeg. for 5 (cf. v.l. 1).—a) Ś1 Dg1 Dt1 Dm1 D2.4.6.8 T1.3 G1.3 M1 तत्र; Cg as in text (for ततः). Ś1 Ñ1 Dg1 Dt1 Dm1 D1–4.6.8 S त्रयोदशे वर्षे (for संवत्सरादूर्ध्वं).—b) Ś1 Dg1 Dt1 Dm1 D1–4.6.8 S Cg राजा (for सम-). Dg1 Dt1 Dm1 D4.6.8 S Cg [अ]मंत्रयत प्रभुः. Ñ1 ****** पतिं (illeg.).—c) Ś1 D1–3 राज्ये; Ñ1 illeg.; Ñ2 V1 B1.3.4 D5.7 राजा; M2 वीरं (for रामं).—d) Ś1 समेतो मंत्रिराजभिः; Ñ2 V1 B1.3.4 D5.7 संमंत्र्य सचिवैः सह.

**6** V2 illeg. for 6 (cf. v.l. 1).—a) Ś1 D1–3 ततः (for तस्मिन्). Ś1 संभ्रियमाणे; V1 संमंत्र्यमाणे; B1 संक्रियमाणे (for संभ्रियमाणे). D1 च (for तु).—Ñ1 om. 6cd.—d) Dg1 T1 Cg आर्या सा; D4 T2.3 M1.2 अनार्या; Cr.k.t as in text (for ममार्या). ❀ Ct : अनार्या इति क्वचित्पाठः. ❀ Ś1 D1.2 आर्या वरमयाचत; Ñ2 V1 B1.3.4 D5.7 अनार्या श्वशुरं मम.

**7** V2 illeg. for 7 (cf. v.l. 1). Ś1 om. 7–9.—a) Ñ2 D5.7 संप्रगृह्य; Dt1 D6 T2 Ct परि°; M3 सा प्र°; Cv.r.g as in text (for प्रति°). Ñ2 V1 B1.3.4 D5.7 प्रणयिनी; D3 च कैकेयी (for तु कैकेयी).—b) Ñ2 V1 B3.4 D5 प्रथमं (for श्वशुरं). T2 सुव्रतं च (for सुकृतेन). Ñ2 V1 B3.4 Dg1 Dm1 D5.8 G3 वै; G2 तं; Cm.g.t as in text (for मे). Ñ1 D3 प्रथमं सुकृतैर्नृपं; B1 प्रथमं प्रहृतेन वै; D1.2 प्रथमं सुकृतैः पतिं; D7 प्रथमं सुकृते वने.—d) Ñ V1 B1.3.4 D5.7 देवी वरमयाचत; D1–3 वरं परमयाचत. Ñ V1 B1.3.4 D1–3.5.7 om. 7ef.

**8** V2 illeg. for 8 (cf. v.l. 1). Ś1 om. 8 (cf. v.l. 7).—a) G2 नात्र (for नाद्य). D8 G3 वा (for च). Ñ2 V1 B1.3.4 D5.7 न शयिष्ये न पास्यामि.—b) Ñ2 B1.3.4 D5.7 च भोक्ष्ये; Dg1 Dt1 D6 T1.3 G1 M2 पास्ये च; Dm1 D3 च यास्ये; D1.2.8 च पास्ये; D4 G3 पास्ये न (for पास्येऽहं). ❀ Cg : पास्य इत्यात्मनेपदमार्षम्. ❀ Ñ2 Dg1 D1–3 T3 कथंचन (for कदाचन).—d) Ñ1 Dt1 D6 G यदभिषिच्यते.—After 8, Ñ2 V1 B1.3.4 D5.7 ins. :

873* यस्त्वया मे वरो दत्तः पुरा देवासुरे प्रभो ।
तत्सत्यं कुरु राजेन्द्र प्रतिज्ञापारगो भव ।
अनेनैवाभिषेकेण भरतो मेऽभिषिच्यताम् ।

[(l. 2) Ñ2 B3 D7 तं; D5 ते (for तत्).—(l. 3) =2.10.27cd. Ñ2 B1 D5.7 मम पुत्रश्च भरतो ह्यनेनैवाभिषिच्यतां.]—Ñ2 V1 B1.3.4 cont. :

873* राघवश्च वनं घोरमद्यैव प्रतिपद्यताम् ।
चतुर्दश हि वर्षाणि चीरकृष्णाजिनाम्बरः ।
रामश्च प्रेष्यतां शीघ्रं भरतश्चाभिषिच्यताम् ।

[(l. 3) B4 erroneously repeats the prior half after 10ab. B3.4 सं- (for first च).]

**9** V2 illeg. for 9 (cf. v.l. 1). Ś1 om. 9 (cf. v.l. 7). Ñ1 om. 9–10.—a) D4 G1 एवं (for इति).—b) Ñ2 V1 B1.3.4 D5.7 मे महारथः; Dt1 D6 मे स पार्थिवः; D1–3 मे समन्मथः; T2 मम मानदः (for मे स मानदः).—c) D1.2 उवाच वाक्यैर् (for अयाचतार्थैर्). T2 अल्पर्थैर् (for अन्वर्थैर्). Ñ2 V1 D5.7 वाक्यैरयाचतात्य(V1 °न्व)र्थैर्; B1 राज्यं ययाचे धर्मेण; B3 वाक्यैरयाचि तां धर्मैर्; B4 उवाचैव यतो धर्मं.—d) Ñ2 D1.5.7 न च वाक्यं; B1 नान्यां याच्ञां; B4 न तदाज्ञां (for न च याच्ञां). D1 प्रयाचसे (for चकार सा). D2 वरं नान्यमयाचत.

**10** V2 illeg. for 10 (cf. v.l. 1). Ñ1 om. 10 (cf. v.l. 9).—a) Ś1 D1.2 तदा ब्रह्मन्; Ñ2 V1 B1.3.4 D5.7 महावीर्यो (for महातेजा).—b) Ś1 D1.2 सप्तविंशकः; M2 पंचविंशतिः (for पञ्चविंशकः). ❀ Cv.r : पञ्चविंशकः पञ्चविंशतिवर्ष इति व्यपदेष्टुं शक्यते । नातिपरिणत इत्यर्थः ।; Cm : वनप्रवेशसमये मम भर्ता वयसा पञ्चविंशकः । पञ्चविंश इव । क इवार्थे । पञ्चविंशतिवार्षिक इति व्यपदेष्टुं शक्यते । नातिपरिणत इत्यर्थः ।; Ct : वयसा पञ्चविंशकः । वननिर्गमनकाल इति शेषः । नन्विदमयुक्तम् । 'ऊन षोडशवर्षोऽयम्' इति विश्वामित्रं प्रति दशरथोक्तेः । उषित्वा द्वादश समाः' इत्यत्रोक्तेश्चेति चेन्न । अल्पान्तरत्वात् । अतितरुणावस्थायामपि राज्यं त्यक्तवानित्यर्थे तात्पर्येणास्थया तथोक्तेः । यद्वातिक्रान्तपञ्चविंशक इत्यर्थः. ❀—After 10ab, B4 repeats the prior half of l. 3 of 873*, while Ś1 Ñ2 V1 B1.3.4(after the repetition) Dg1 Dt1 Dm1 D1–8 S ins. :

874* अष्टादश हि वर्षाणि मम जन्मनि गण्यते ।

[Ś1 [अ]पि; V1 B4 D1–3 M2 तु; Dg1 T3 G3 M1.3 Ck

अभिषेकाय तु पितुः समीपं राममागतम् ।
कैकेयी मम भर्तारमित्युवाच द्रुतं वचः ॥ ११
तव पित्रा समाज्ञप्तं ममेदं शृणु राघव ।
भरताय प्रदातव्यमिदं राज्यमकण्टकम् ॥ १२
त्वया तु खलु वस्तव्यं नव वर्षाणि पञ्च च ।
वने प्रव्रज काकुत्स्थ पितरं मोचयानृतात् ॥ १३
तथेत्युवाच तां रामः कैकेयीमकुतोभयः ।
चकार तद्वचस्तस्या मम भर्ता दृढव्रतः ॥ १४
दद्यान्न प्रतिगृह्णीयात्सत्यं ब्रूयान्न चानृतम् ।
एतद्ब्राह्मण रामस्य व्रतं ध्रुवमनुत्तमम् ॥ १५
तस्य भ्राता तु वैमात्रो लक्ष्मणो नाम वीर्यवान् ।
रामस्य पुरुषव्याघ्रः सहायः समरेऽरिहा ॥ १६

G. 3. 53. 19
B. 3. 47. 19
L. 3. 52. 18

च; G1 [ ए ]व; G2 om. (subm.) (for हि). Ñ2 (marg.) अष्टाद्य दश वर्षाणि; D5.7 अष्टादश वर्षाणि (for the prior half). Ś1 D1–3 [ अ ]ष्टायुर्विगण्यते; Ñ2 B1 Dg1 D5.7 जन्मनि गद्यते; B3.4 D4.8 जन्म विगण्यते (for जन्मनि गण्यते). G3 गण्यंते मम जन्मनि (for the post. half). ❀ Cm : मम जन्मनि तदानीं वर्षाणि अष्टादश गण्यते गण्यन्ते । वचनव्यत्यय आर्षः । वर्षाण्यष्टादशेति गण्यत इति वा ।; Ck : मम जन्म चेति । जन्मारभ्येति यावत् । अत्र काचित् काकदन्तपरीक्षा रामवयोविषयिण्यस्ति । सा नापेक्ष्यते । यद्वा लिखामः । द्वादशे तु मुनेः संगः सीतया चानया सह । पुरेकैवत्सरं वासः पञ्चविंशे वनागमः । मुन्याश्रमेष्वथ दश पञ्चवर्ष्यां ततस्त्रयः । अथोनचत्वारिंशे तु सीतापहरणं स्थिति । ततश्च पञ्चविंशतिवर्षक इति ।; Ct : मम जन्मतो वनप्रवेशसमयेऽतीतानीत्यर्थः गण्यत इत्यार्षमेकत्वम् । मम पञ्चतन्मात्रपञ्चमहाभूतपञ्चेन्द्रियाहंकारबुद्धिमनोरूपाण्यष्टादश वर्षाणि पर्वाणि जन्मनि कार्ये गण्यन्त इति तन्मूलीभूता प्रकृतिरहमिति सूचितम्. ❀ ]

—$^{c}$) Ś1 D1–3 लोके राम इति ख्यातो. —$^{d}$) Dt1 D6 T3 सत्यवान् (for गुण°). Ś1 D1–3 सत्यविक्रमः; V1 B3.4 Dg1 D4.8 T1 G1.3 सत्यवाञ्शुचिः; Dt1 D6 T3 M2 शीलवाञ्शुचिः. —V1 om. 10$^{ef}$. —$^{e}$) Ś1 महाबुद्धिः (for °बाहुः). —After 10, Ś1 repeats 4$^{ab}$. —After 10, Ñ2 V1 B1.3.4 Dg1 Dt1 Dm1 D1–8 T1.3 G M ins. :

875* कामार्तश्च महातेजाः पिता दशरथः स्वयम् ।

[ Ñ2 V1 B1.3.4 D5.7 तं तु (B1 च) राजा; D3 कामार्तः स; T1 कामार्तस्तु (for कामार्तश्च). Dg1 D4 T3 G1 M3 महाबाहुः; Dt1 D6 °राजः (for °तेजाः). D1–3 पिता तस्य महात्मनः (for the post. half). ]

—All the above MSS. cont., while Ś1 ins. after 4$^{ab}$ (r.) :

876* कैकेय्याः प्रियकामार्थं तं रामं नाभ्यषेचयत् ।

[ T3 रामं तं (by transp.). Ś1 D1–3 राघवं नाभिषिक्तवान्; Ñ2 V1 B1.3.4 D5.7 रामं नैवाभ्यषेचयत् (for the post. half).]

**11** V2 illeg. for 11 (cf. v.l. 1). —$^{a}$) Ñ1 illeg. for अभिषे. V1 D4 च (for तु). Ś1 तदाभिषेकाय पितुः; B1.3 D1–3 अ(B3 D1.2 त)थाभिषेकाय पितुः. —$^{b}$) D4 समीपे (for °पं). —$^{c}$) B3 नाम (for मम). —$^{d}$) D1 प्रत्युवाच (for इ°). Ś1 Ñ V1 B1.3.4 D1–3.5.7 T3 दृढव्रतं; Dg1 Dm1 D8 G2.3 दृढं वचः; D4 G1 M Cg ध्रुतं वचः; T2 [ अ ]द्भुतं वचः. —B4 repeats erroneously 12$^{a}$ after 13.

**12** V2 illeg. up to 12$^{a}$ (cf. v.l. 1). —$^{a}$) Ñ2 V1 B1.3.4 D5.7 [ अ ]भ्यनुज्ञातं (B1 °तो; B3 °तुं) (for °ज्ञप्तं). —$^{b}$) V1 तव (for मम). Ś1 D1–3 रघुनंदन (for शृणु राघव). —$^{c}$) Ñ2 V B1.4 D5.7 प्रदास्यामि (for °तव्यम्). —$^{d}$) Ś1 D1.2 स्फीतं; Ñ2 V B1.4 D5.7 पितृ- (for इदं).

**13** $^{a}$) Ś1 B3.4 D5 च; T1 हि (for तु). —$^{c}$) Ñ2 V2 B1.3.4 D3.5.7 T2 वनं. V1 त्वं वनं व्रज (for वने प्रव्रज). —$^{d}$) D1 मोक्षय (for मोचय). —After 13, B4 repeats erroneously 12$^{a}$.

**14** $^{a}$) B1 ततो हि (for तथेति). Ś1 B3 Dm1 D1–3.8 G1 M2.3 [ उ ]क्त्वा च (B3 स; G1 तु) (for [ उ ]वाच). —$^{b}$) Ñ1 illeg.; G2 मध्यमाम् (for कैकेयीम्). Ś1 D1.2 अकुतोभयां (D2 °यात्); Ñ1 च दृढव्रतः; Ñ2 V B1.3.4 D5.7 पितुरग्रतः (for अकुतोभयः). —$^{c}$) Ñ1 अकरोत् (for चकार). Ñ2 V B1.3.4 Dm1 D1.3.5.7.8 वचनं; G3 च वचस् (for तद्वचस्). Ś1 D2 स चकार वचस्. Dt1 D6 श्रुत्वा (for तस्या). —$^{d}$) Dg1 Dt1 D4.6 T2.3 G2 M3 transp. मम and भर्ता.

**15** $^{a}$) Ś1 Dt1 D6 दद्यां न प्रतिगृह्णीयां. —$^{b}$) D1 गिरं; D3 ऋतं (for सत्यं). Ś1 Dt1 D6 ब्रूयां न (for ब्रूयान्न). D4 वा (for च). Dg1 transp. न and च. D1 [ अ ]नृतां. Ñ2 V B1.3.4 D5.7 न ब्रूयादनृतां गिरं. —$^{cd}$) Ś1 D2 इति (for एतद्). Dg1 वृत्तं (for व्रतं). Ś1 B3 Dg1 D2.3 धर्मम्; Ñ1 चैवम्; Dt1 D6 T3 धृतम् (for ध्रुवम्). V1 D2.3 अनुव्रतं (D3 °तः) (for अनुत्तमम्). D1 इति ब्रह्मादयो देवा जानीतं राघवव्रतं (sic).

**16** $^{a}$) V1 M3 च (for तु). Dg1 Dm1 D3.4.8 T1.2 G1.3 M Cm.g.k द्वै (M1 also वै *inf. lin. sec. m.*)मात्रो; D1 त्वनुजो; Ct as in text (for वैमात्रो). ❀ Cm : द्वैमात्रः द्वयोर्मात्रोरपत्यं सापत्निकमातुः पुत्र इत्यर्थः ।; Cg : द्वयोर्मात्रोरपत्यं पुमान् द्वैमात्रः । अण् प्रत्ययः । "मातुरुत्सङ्ख्या-" इत्युदादेशाभाव आर्षः । गुर्वक्षरं च छान्दसम् ।; Ck : वैमात्र इति । विभिन्नाया मातुरपत्यं वैमात्रः । मातृशब्दस्य स्वस्रादित्वेन स्त्रीप्रत्ययाभावान्न ढक् । असङ्ख्यादिपूर्वत्वान्नापि मातुरित्युदित् । अतः केवलः अपत्योऽण् । भिन्नोदरभ्रातेत्यर्थः ।; Ct : वैमात्रः । शुभ्रादिषु मातृशब्दपाठेऽप्यार्षोऽण् । असहोदरो भ्रातेत्यर्थः । विभिन्नाया मातुरपत्यं वैमात्रः. ❀ G2 भ्राता तु तस्य वैमात्रो. —D4 om. 16$^{c}$–17$^{b}$. —$^{d}$) Ś1 Ñ2 V B1.3.4 D1–3.5.7 समपद्यत (for समरेऽरिहा). —After 16, Ñ2 V B1.3.4 D5.7 ins. :

G. 3. 57. 21
B. 3. 47. 19
L. 3. 52. 18

स भ्राता लक्ष्मणो नाम धर्मचारी दृढव्रतः ।
अन्वगच्छद्धनुष्पाणिः प्रव्रजन्तं मया सह ॥ १७
ते वयं प्रच्युता राज्यात्कैकेय्यास्तु कृते त्रयः ।
विचराम द्विजश्रेष्ठ वनं गम्भीरमोजसा ॥ १८
समाश्वस मुहूर्तं तु शक्यं वस्तुमिह त्वया ।
आगमिष्यति मे भर्ता वन्यमादाय पुष्कलम् ॥ १९
स त्वं नाम च गोत्रं च कुलमाचक्ष्व तत्त्वतः ।
एकश्च दण्डकारण्ये किमर्थं चरसि द्विज ॥ २०
एवं ब्रुवत्यां सीतायां रामपत्न्यां महाबलः ।
प्रत्युवाचोत्तरं तीव्रं रावणो राक्षसाधिपः ॥ २१
येन वित्रासिता लोकाः सदेवासुरपन्नगाः ।
अहं स रावणो नाम सीते रक्षोगणेश्वरः ॥ २२

---

877* तेनोच्यमानस्तेजस्वी राघवो हेतुमद्वचः ।
लक्ष्मणं प्रत्युवाचेदं सत्ये मे रमते मनः ।

**17** Ñ1 D4 om. $17^{ab}$ (for D4 cf. v.l. 16). V1 om. $17$–$18^{b}$. —[a]) Ñ2 V2 भ्राता तु; B1.3.4 तं भ्राता; D8 तद्भ्राता; G3 सद्भ्राता (for स भ्राता). Ñ2 V2 B1.3.4 धीमान्; Dg1 T3 नित्यं (for नाम). D5.7 भ्रातरं लक्ष्मणं धीमान्. —[b]) Dt1 D6 ब्रह्मचारी (for धर्म°). Ñ2 V2 B1.3.4 D5.7 महाबलः; Dg1 Dm1 D8 T3 G M1.3 महारथः; M2 महाव्रतः (for दृढव्रतः). —For $17^{ab}$, Ś1 D1–3 subst. :

878* स भ्रातरं महाबाहुं भक्त्या परमयात्मवान् ।

[ Ś1 महाबाहुर्. D1 परमम् (for °मया). Ś1 परमवीर्यवान् ].
—D6 reads $17^{cd}$ in marg. —[c]) Ñ2 B3 D4 अनु(D4 °भ्य)गच्छद्. Ś1 महातेजाः; D1–3 महावीर्यः(D2 °र्यं) (for धनुष्पाणिः). —Ñ1 illeg. for $17^{d}$. —After 17, Dg1 Dt1 Dm1 D4.6(m.).8 T G M2.3 ins. :

879* जटी तापसरूपेण मया सह सहानुजः ।
प्रविष्टो दण्डकारण्यं धर्मनित्यो दृढव्रतः ।

[ (l. 1) D6 जटा-. T2 सार्धं (for सह). D4 * सानुजः (for सहा°). —(l. 2) K(ed.) जितेंद्रियः (for दृढव्रतः). ]

**18** V1 om. $18^{ab}$ (cf. v.l. 17). —[b]) Ñ1 Dg1 D1.3 T3 च(T3 सु-) कृते; Ñ2 B1.3.4 D5.7 वचनात् (for तु कृते). V2 कैकेयीवचनात्त्रयः. —[c]) Ś1 Ñ V B1.3.4 D1–5.7 G M2.3 विचरामो; T2 इह रामो (sic) (for विचराम). —After 18, Ñ2 V B1.3.4 D5.7 ins. :

880* अस्मिन्व्यालमृगाकीर्णे वने प्रतिवसामहे ।

[ G(ed.) तस्मिन्. V1 B1 -समाकीर्णे (for -मृगा°). ]

**19** [a]) Ś1 T3 समाश्वस्य; D3 समाश्वसन् (for °श्वस). D1 मुहूर्ते (for °र्तं). Ś1 D1–3 च (for तु). Ñ2 V B1.3.4 D5.7 समाश्वसिहि तावत्त्वं. —[b]) B1 सत्यं वस्तुम्; B3 वस्तुं शक्यम् (by transp.); Cg as in text (for शक्यं वस्तुम्). Ñ1 श***सितुं (illeg.) मया; Ñ2 D5.7 सत्यं वक्ष्याम्यहं तव. —[d]) D5.7 आहृत्य (for आदाय). V1 पुष्करं; B1 पुष्पकं (for पुष्कलम्). —After 19, Dg1(in marg.) Dt1 Dm1 D4.6 T G1 ins. :

881* रुरून्गोधान्वराहांश्च हत्वादायामिषं बहु ।

[ T1 [आ]मिषान्बहून् (for °षं बहु). ]

**20** [a]) Ñ1 त्वं हि (for स त्वं). ❀ Cm : स त्वमिति । कुलशब्देन मातृकुलम्, गोत्रशब्देन पितृकुलमुच्यते ।; Ct : कुलं प्रसिद्धवंश्यकृतम् । यद्वा गोत्रं पितृकुलम् । कुलं मातुः. ❀—[b]) Ś1 Ñ V1 B1.3.4 Dm1 D1–3.5.8 T1 M2 चा(D2 वा)चक्ष्व (for आचक्ष्व). —[c]) Ś1 D1–3 एकस्त्वं; Ñ1 किमर्थं (for एकश्च). Ñ1 Dm1 D1.2.8 G3 दंडकारण्यं. —[d]) Ñ1 एकश्च (for किमर्थं). —After 20, Ñ1 ins. :

882* सीतया सोऽथ संपृष्टः प्रहसन्रावणोऽब्रवीत् ।
विदर्शयन्द्विजाञ्शुक्लान्समासन्नान्निरीक्ष्य च ।;

while Ñ2 V B1.3.4 D5.7 ins. :

883* रामो मे संशयो नास्ति यथा त्वां सत्करिष्यति ।
यतयश्च प्रियास्तस्य भर्तुः प्रियकथस्य मे ।

[ (l. 1) V2 B3 रामे. V1 B1 [ऽ]पि; V2 तु (for मे). —(l. 2) V B1.3.4 भर्ता (for भर्तुः). V1 प्रियसखश्च; V2 B1 प्रियकथश्च; B3.4 प्रियकथं च (for °कथस्य). ]

**21** Ñ1 om. 21. —[a]) Ś1 D1–3 ब्रुवंत्याः; Dg1 Dt1 T1 G ब्रुवंत्यां; M1 वदंत्यां (for ब्रुवत्यां). Ś1 D1–3 सीताया (for °यां). —[b]) Ś1 D1–3 रामपत्न्या (for °त्न्यां). Ñ2 D5.7 स रावणः (for महाबलः). —[cd]) Ś1 D1–3 ततस् (for [उ]त्तरं). D3 राक्षसेश्वरः. Ñ2 V B1.3.4 D5.7 कामबाणार्दितस्तत्र राक्षसस्त्विदमब्रवीत्. —After 21, Ñ2 V B1.3.4 D5.7 ins. :

884* शृणु यश्च यतश्चाहं श्रुत्वा मां प्रतिमानय ।
अनेन छद्मना भद्रे स्वयं त्वां द्रष्टुमागतः ।

[ (l. 1) B3 प्रतिपालय (for °मानय). B3 reads from l. 2 up to 22 in marg. ]

**22** B3 reads 22 in marg. (cf. v.l. 884*). —[a]) Ñ2 V B1.3.4 D5.7 विद्राविता (for वित्रासिता). M1 देवाः (for लोकाः). —[b]) Dt1 -मानवाः; D6 -मानुषाः (for -पन्नगाः). Ś1 D1–3 सामराः सचराचराः; Ñ1 सदेवाः सतदाधिपाः (corrupt); Ñ2 V B3.4 D5.7 सामराः(V समरे; D7 lacuna) सामराधिपाः; B1 सामराः समरुद्गणाः. —[c]) T1.2 तु (for स). —[d]) Ś1 D1–3 सीते राक्षसपुंगवः; Ñ1 ** दानवक**; Ñ2 D5.7 सर्वलोकस्य तापनः; V1 सर्वलोकभयंकरः; V2 B1.3.4 सर्वलोकप्रतापनः(V2 °पवान्). —After 22, Ñ V B1.3.4 D5.7 ins. :

885* यस्यादेशाच्च सुश्रोणि खरो रक्षति दण्डकम् ।
भ्राता वैश्रवणस्याहं सापत्न्यो वरवर्णिनि ।

त्वां तु काञ्चनवर्णाभां दृष्ट्वा कौशेयवासिनीम् ।
रतिं स्वकेषु दारेषु नाधिगच्छाम्यनिन्दिते ॥ २३
बह्वीनामुत्तमस्त्रीणामाहृतानामितस्ततः ।
सर्वासामेव भद्रं ते ममाग्रमहिषी भव ॥ २४
लङ्का नाम समुद्रस्य मध्ये मम महापुरी ।
सागरेण परिक्षिप्ता निविष्टा गिरिमूर्धनि ॥ २५
तत्र सीते मया सार्धं वनेषु विचरिष्यसि ।
न चास्यारण्यवासस्य स्पृहयिष्यसि भामिनि ॥ २६
पञ्च दास्यः सहस्राणि सर्वाभरणभूषिताः ।
सीते परिचरिष्यन्ति भार्या भवसि मे यदि ॥ २७
रावणेनैवमुक्ता तु कुपिता जनकात्मजा ।
प्रत्युवाचानवद्याङ्गी तमनादृत्य राक्षसम् ॥ २८
महागिरिमिवाकम्प्यं महेन्द्रसदृशं पतिम् ।
महोदधिमिवाक्षोभ्यमहं राममनुव्रता ॥ २९

G. 3. 53. 44
B. 3. 47. 33
L. 3. 52. 31

पुत्रो विश्रवसः शूर औरसोऽहं महात्मनः ।
पुलस्त्यो ब्रह्मणः पुत्रः पौत्रस्तस्याहमङ्गने ।
स्वयंभुवा दत्तवरः कामरूपी मनोगतिः । [5]
दशग्रीव इति ख्यातो लोके ख्यातपराक्रमः ।
विश्रुतं कर्मजं नाम रावणोऽस्मि शुचिस्मिते ।

[ Ñ1 om. l. 1. —(l. 1) V तु (for च). —Ñ1 transp. l. 2 and l. 3. —(l. 2) Ñ2 V स्वापत्नो (for °ह्मणो). —(l. 3) B1 महाबलः (for °त्मनः). Ñ1 साक्षाद्विश्रवसः पुत्रः पौलस्त्यकुलनंदनः. —Ñ1 om. l. 4-7.—After l. 6, V2 B1.3.4 ins. :

885(A)* वरुणं सयमं सेन्द्रं विश्वं वारयतो जगत् ।

[ V2 वरुणं समहेंद्रं( subm.) (for the prior half). V2 B1 मम (for जगत्). ]
—(l. 7) V1 शुचिव्रते (for °स्मिते). ]

23 [a]) Ñ2 B4 D3.5.7 च (for तु). Ñ2 V B1.3.4 D5.7 -गर्भाभां; Dg1 T3 -वर्णांगीं (for -वर्णाभां). —[b]) Ñ2 V B1.3.4 D5.7 पीत- (for दृष्ट्वा). Ñ1 B3 -वाससीं( Ñ1 °सं) (for -वासिनीम्). —[c]) Ś1 D1-3 नाहं; D4 रतं (for रतिं). V1 च स्वेषु (for स्वकेषु). —[d]) Ś1 D1-3 धृ( Ś1 प्री )तिं विंदामि( D1 बध्नामि ) (for नाधिगच्छामि). Ñ2 V B1.3.4 D5.7 चिंतयन् (for [ अ ]निन्दिते).

24 [b]) Ś1 Ñ V B1.3.4 D1-3.5.7 भार्याणां मम मैथिलि (V1 चैव हि). —[c]) Ñ V B1.3.4 D5.7 तासां त्वं; Dg1 T3 मे भद्रे; T2 भद्रे त्वं (for भद्रं ते). Ś1 D1-3 सर्वासां त्वं वरारोहे. —[d]) Ñ1 transp. मम and भव. S1 सारमग्र्या भविष्यसि; D1-3 तासामग्र्या( D1 °ग्रे; D3 [ with hiatus ] अग्रे मम) भविष्यसि.

25 [b]) T1.2 G3 M1 मम मध्ये (by transp.) (for मध्ये मम). Ś1 D1-3 द्वीपे श्रीमति सा पुरी; Ñ1 परे पारे पुरी मम; Ñ2 V B1.3.4 D5.7 द्वीपे श्रेष्ठा पुरी मम. —[c]) T2 विनिक्षिप्ता (for परि°). —[d]) V1 Dg1 T1 नग- (for गिरि-). —After 25, Ñ2 V B1.3.4 D5.7 ins. :

886* तप्तहेममयैः शृङ्गैरुच्छ्रितैरभ्यलंकृता ।
खातगम्भीरपरिखा प्रासादाट्टालसंचया ।
विश्रुता त्रिषु लोकेषु यथेन्द्रस्यामरावती ।

[ Ñ2 V1 D5.7 om. l. 1. —(l. 2) B1.3 ख्यात- (for खात-). V1 -संचिता (for °चया). V2 B1.3 प्रासादाट्टावतंसि( V2 °स )का; B4 प्रकरोट्टावतंसिका (for the post. half). ]

—Ñ2 V B1.3.4 D5.7 cont.; Ś1 D1-3 ins. after 25 :

887* नीलजीमूतवर्णानां राक्षसानां महापुरी ।
विश्वकर्मकृता दिव्या त्रिंशद्योजनमायता ।

[ (l. 1) D1 -वर्णाभा (for °नां). Ñ2 महात्मनां (for °पुरी). —(l. 2) After the prior half, V1 ins. :

887(A)* नानारत्नविभूषिता ।
शतयोजनविस्तीर्णा.

[ B3.4 त्रिंशद्योजनविस्तृता (for the post. half). ] ]

26 [b]) Ś1 Dg1 G M2.3 विहरिष्यसि. —[c]) Ñ1 B3 [ ए ]व (for च). V2 Dt1 Dm1 D6.8 G3 वन- (for [ अ ]रण्य-). —[d]) D3 विस्मरिष्यसि (for स्पृहयि°). Ñ1 शोभने; Ñ2 V B1.3.4 D5.7 भाविनि. —After 26, Ñ2 V B1.3.4 D5.7 ins. :

888* मम मूर्धाभिषिक्तस्य राक्षसानां महात्मनाम् ।
सुरूपा बहवो भार्यास्तासां त्वं प्रथमा भव ।

[ (l. 1) V1 D5.7 मूर्धाभिषिक्तानां (for °क्तस्य). ]

27 [a]) B3 त्वां च (for पञ्च). Ś1 Ñ V B1.3.4 Dm1 D1-3.5.7.8 T2 G2 M3 दासी-; G3 दास- (for दास्यः). Ś1 Ñ2 V B1.3.4 D1-3.5.7 -शतानि त्वां; Ñ1 -सहस्रस्य (for सहस्राणि). —[b]) Ś1 Ñ2 V2 B1.3.4 D1.3 -भूषितां (for °ताः). —[c]) Ñ1 सीते त्वोपचरिष्यंति. —[d]) Ś1 Ñ V B1.3.4 D1-3.5.7 भार्या मे भव शोभने( D2 °भिता). —After 27, Ñ2 V B1.3.4 D5.7 ins. :

889* सप्तसप्तकवेत्ताहमष्टाष्टकविभूषितः ।
पञ्चपञ्चकतत्त्वज्ञो रावणोऽहं भजस्व माम् ।

[ (l. 1) B1.3 -विभूषणः (for °षितः). D5 अष्टाष्ट***** (lacuna) (for the post. half). ]

28 [a]) Ś1 Ñ2 V1 B1.3.4 D1.2.5.7 सा (for तु). —[b]) Ñ2 V B1.3.4 D5.7 रुषिता (for कुपिता). —[c]) Ś1 D1.2 तमुवाच (for प्रत्यु°). —[d]) Ś1 D1.2 अनादृत्य तु (with hiatus) (for तमनादृत्य). —After 28, Ñ1 ins.; while V2 cont. after 892* :

890* किं त्वं वैश्रवणं चैवं सर्वदेवनमस्कृतम् ।
भ्रातरं कथयन्मूढ त्वं पापं कर्तुमिच्छसि ।

29 [a]) Ś1 Ñ1 B1.3 D2 महाबलम्; Ñ2 V B4 D1.3.5.7

G. 3. 53. 29
B. 3. 47. 35
L. 3. 52. 32

महाबाहुं महोरस्कं सिंहविक्रान्तगामिनम् ।
नृसिंहं सिंहसंकाशमहं राममनुव्रता ॥ ३०
पूर्णचन्द्राननं वीरं राजवत्सं जितेन्द्रियम् ।
पृथुकीर्तिं महाबाहुमहं राममनुव्रता ॥ ३१
त्वं पुनर्जम्बुकः सिंहीं मामिहेच्छसि दुर्लभाम् ।
नाहं शक्या त्वया स्प्रष्टुमादित्यस्य प्रभा यथा ॥ ३२
पादपान्काञ्चनान्नूनं बहून्पश्यसि मन्दभाक् ।
राघवस्य प्रियां भार्यां यस्त्वमिच्छसि रावण ॥ ३३

°चलम् ( for °गिरिम् ). Ś1 G2 इहाकंप्यं( Ś1 °पं ); Ñ D5.7 इवाकंपं; D2 महाकायं ( for इवाकम्प्यं ). —$^{b}$ ) Ś1 D1-3 नागेंद्र- ( for महेन्द्र- ). Dm1 D8 T1 G3 -सदृशद्युतिं ( for °शं पतिम् ). —After 29, Ś1 reads $31^{ab}$; while Dg1 Dt1 Dm1 D4.6.8 T1.3 G1.3 M ins. :

891* सर्वलक्षणसम्पन्नं न्यग्रोधपरिमण्डलम् ।
सत्यसंधं महाभागमहं राममनुव्रता ।

[ ( l. 2 ) T1 महाबाहुम् ( for °भागम् ). D4 G1 M3 transp. महाभागम् and अहं रामम्. ❀ Cg : न्यग्रोधपरिमण्डलं वटवृक्षमिव महापरिणाहम् । यद्वा न्यग्रोधवद्बहुशाखबन्धुस्तोमं तद्वत् सर्वसमाश्रयणीयमिति वा । यद्वा "कूपोदकं वटच्छाया युवतीनां स्तनद्वयम् । शीतकाले भवत्युष्णमुष्णकाले च शीतलम् । " इत्युक्तरीत्या सर्वकालेऽपि सर्वजनानुकूलमित्यर्थः. ❀

**30** Ñ1 T2 om. ( hapl. ) 30. Ñ2 V B1.3.4 D2.3.7 transp. 30 and 31. —$^{a}$ ) Ñ2 V B1.3.4 D5.7 महाबलं ( for °बाहुं ). —$^{c}$ ) ❀ Ct : नृसिंहमित्यस्य हिरण्यकशिपुहन्तृत्वं व्यङ्ग्यम्. ❀ Dm1 D8 G3 -विक्रांतम् ( for -संकाशम् ). Ś1 D1-3 सिंहं सिंहीव दुर्धर्षम् ; Ñ2 V B1.3.4 D5.7 सिंहं सिंहीव विक्रांतम्. —After 30, Ñ2 B1.3.4 D5.7 ins.; V2 ins. after 28 :

892* जनकस्य सुतां राज्ञः स्नुषां दशरथस्य च ।
रामस्य दयितां भार्यां विद्धि मां पतिदेवताम् ।
पितुर्निदेशाद्भर्तारं वनवासधृतव्रतम् ।
अनुव्रतां चानुगतां विद्धि मां व्रतचारिणीम् ।
तमिन्द्रसमकर्माणं सर्वलोकसुखावहम् । [5]
मां विद्धि संश्रितां नित्यं शचीमिव पुरंदरम् ।
महात्मनि महाभागे रामे शस्त्रभृतां वरे ।
भक्तां भर्तरि मां विद्धि वसिष्ठेऽरुन्धतीमिव ।
अनाधृष्ये सपत्नानां खड्गबाणधनुर्धरे ।
भर्तर्यनन्यां मां विद्धि स्वाहामिव हुताशने । [10]
संश्रित्य सुखमेधन्ते यं प्रजा दीप्ततेजसम् ।
तस्मिन्भर्तरि मां विद्धि विष्णोः श्रियमिवाचलाम् ।
सर्वभावानुरक्तां मां तस्यैतां वशवर्तिनीम् ।
समदुःखसुखां रामे विद्धि छायामिव ध्रुवे ।

[ ( l. 1 ) B1 विद्धि ( for राज्ञः ). —( l. 2 ) V2 पत्नीं ( for भार्यां ). —( l. 3 ) B3 नियोगाद् ( for निदेशाद् ). Ñ2 -कृतं; D5.7 -कृत- ( for -धृत- ). —( l. 4 ) B1.3 ब्रह्मचारिणीं ( for व्रत° ). —( l. 5 ) B4 तमिंद्रं विज्ञकर्माणं ( for the prior half ). Ñ2 -लोके ( for -लोक- ). —D5 om. l. 6. —( l. 6 ) V2 रामं; B1 नित्यां ( for नित्यं ). —( l. 7 ) B1.3 धर्मभृतां ( for शस्त्र° ). V2 राजधर्मभृतां वरे ( for the post. half ). —( l. 8 ) V2 B1.3 नित्यां( V2 °त्यं ) ( for भक्तां ). —V2 illeg. for the post. half. —Ñ2 D5.7 om. l. 9. —( l. 9 ) V2 B1 अप्रधर्षे; B3 अप्रधास्ये ( for अनाधृष्ये ). V2 रामे खड्गधनुर्धरे; B1.4 चापखड्गधरद्विषि ( for the post. half ). —V2 illeg. from स्वाहाम् in l. 10 up to l. 14. B2 om. l. 11-12. —( l. 11 ) B3 प्रभा- ( for प्रजा ). —( l. 13 ) B1.3.4 तस्येष्टां ( for तस्यैतां ). —( l. 14 ) B1.3 ध्रुवां ( for ध्रुवे ).]

—Thereafter V2 cont. 890*.

—After 30 ( transp. ), V1 reads $37^{cdef}$, $35^{ab}$ and $32^{ab}$.

**31** D1.5 G2 om.( D1 G2 hapl. ) 31. Ś1 reads $31^{ab}$ after 29. Ñ2 V B1.3.4 D2.3.7 transp. 30 and 31. —$^{a}$ ) Ś1 Ñ V B1.3.4 D2.3.7 -चंद्रनिभं ( for -चन्द्राननं ). Ś1 Dt1 Dm1 D6.8 G3 रामं; Ñ2 V B1.3.4 D7 शूरं ( for वीरं ). —$^{b}$ ) Ś1 Ñ V B1.3.4 D2.7 M1 राजपुत्रं; D3 रामभद्रं ( for राजवत्सं ). Ñ2 V1 D7 यशस्विनं ( for जितेन्द्रियम् ). Dg1 T3 राजलक्ष( T3 °मं लक्ष्म )णसंयुतं. ❀ Ct : राजा चासौ वत्सः श्रेष्ठराजस्तं, यद्वा दशरथपुत्रम्. ❀ —Ś1 om. and V2 illeg. for $31^{cd}$. —$^{c}$ ) B3 पृथुवीर्यं; Dg1 T3 ध्रुवकीर्तिं ( for पृथुकीर्तिं ). Ñ B1.3 D2.3.7 T2 महावीर्यम् ; V1 °धैर्यं ; B4 °कीर्तिम् ; Dg1 T3 °सत्त्वम् ; D4 T1 G1.3 M1 °त्मानम् ; M2 °भागम् ( for महाबाहुम् ). —$^{d}$ ) V1 महाबाहुम् ( for अहं रामम् ).

**32** V1 reads $32^{ab}$ after $35^{ab}$ ( cf. v. l. 30 ). —$^{ab}$ ) Ñ2 V B1.3.4 D5.7 व्याघ्रीं ( for सिंहीं ). Ñ V B1.3.4 D5.7 T1 मामिच्छसि सुदुर्लभां ( for $^{b}$ ). Ś1 D1-3 जंबुकस्त्वं नर( D3 पुनर् )व्याघ्रीं मामुपासितुमिच्छसि. —V2 om. $32^{cd}$. —$^{c}$ ) Ś1 D2 च ( for [ अ ]हं ). Ñ1 प्राप्तुं; D1.3 T2 द्रष्टुम् ( for स्प्रष्टुम् ). —$^{d}$ ) Ñ1 भास्करस्य ( for आदित्यस्य ). Ś1 Ñ1 B1 Dg1 T3 प्रभां ( for प्रभा ). Ñ1 B1 इव ( for यथा ). B4 D1 यथा प्रभा ( by transp. ) ( for प्रभा यथा ). —After 32, Ś1 D1.2 read $38^{ab}$.

**33** Ś1 D2 om. 33-$35^{b}$. D1 om., V2 illeg. for 33. —$^{b}$ ) M3 द्रक्ष्यसि ( for पश्यसि ). Ñ2 V1 B1.3.4 D5.7 दुर्मते ( for मन्दभाक् ). ❀ Cg : पादपानिति । आसन्नमरणाः वृक्षान्स्वर्णमयान्पश्यन्तीति प्रसिद्धिः । मन्दभाक् मन्दभाग्यः । यद्वा मन्दं क्षीणमायुरादिकं भजतीति मन्दभाक् । मदभिलाषयुक्तस्त्वं सद्यो मरिष्यसीति भावः. ❀ —$^{d}$ ) G1 स त्वम् ( for यस्त्वम् ). Dt1 lacuna; D4.6 राक्षस ( for रावण ). Ñ2 V1 B1.3.4 D5 यस्त्वं हर्तुमिहेच्छसि; Dm1 D8 G3 अधिगंतुं त्वमिच्छसि; D7 बलात्त्वं हर्तुमिच्छसि. —After 33, Ñ2 ins. :

क्षुधितस्य च सिंहस्य मृगशत्रोस्तरस्विनः ।
आशीविषस्य वदनाद्दंष्ट्रामादातुमिच्छसि ॥ ३४
मन्दरं पर्वतश्रेष्ठं पाणिना हर्तुमिच्छसि ।
कालकूटं विषं पीत्वा स्वस्तिमान्गन्तुमिच्छसि ॥ ३५
अक्षि सूच्या प्रमृजसि जिह्वया लेढि च क्षुरम् ।
राघवस्य प्रियां भार्यामधिगन्तुं त्वमिच्छसि ॥ ३६

G. 3. 53. 50
B. 3. 47. 41
L. 3. 52. 35

893* यो रामस्य प्रियां भार्यां स्वरूपं नेतुमिच्छसि ।

—Thereafter Ñ2 reads $37^{cdef}$. —After 33, B3 reads $35^{ab}$ (including star passages); while D3 reads $38^{ab}$. —After 33, D5 reads $37^{ef}$ twice (second time as in Ñ2).

34 Ś1 D2 om. 34 (cf. v.l. 33). D1.3 transp. $^{ab}$ (followed by 894*) and $^{cd}$ and D1 reads 34 after 35. —$^{a}$) Dg1 [ इ ]व; D1.3.4 T2 G2.3 M [ ए ]व (for च). ❀ Cg : क्षुधितस्य तरस्विन इति चाशीविषस्यापि विशेषणम्. ❀ V2 B1.3.4 कोपितस्ये( B4 °स्यै )व बलिनो. —$^{c}$) D1.3 क्रुद्धस्य; T1 च मुखाद् (for वदनाद्). —$^{d}$) M1 आहर्तुम् (for आदातुम्). D1.3 पुरतः स्थातुमिच्छसि; G2 दंतानादातुमिच्छसि. —For $34^{cd}$, Ñ1 subst.; D1.3 ins. after $34^{ab}$ :

894* आमिषं खादतो मोहान्मुखादाहर्तुमिच्छसि ।

[ Ñ1 आमिषान्यदतो घोरान् (for the prior half). D1 आदातुम् (for आहर्तुम्). ]

—For 34, Ñ2 V1 D5(Ñ2 reads after 37, D5 after $37^{ef}$ [ r. ]).7 subst.; V2 B1.3.4 ins. after $34^{ab}$ :

895* सिंहस्य खादतो मांसं मुखादादातुमिच्छसि ।

[ V2 illeg. after सिंहस्य. ]

—Ñ2 V1 B3 D5 cont. :

896* यो रामस्य प्रियां भार्यां बलाद्धर्तुमिहेच्छसि ।

[ Ñ2 त्वमाहर्तुमिहेच्छसि; V1 इतो नेतुमिहेच्छसि; D5 त्वं मां हर्तुमिहेच्छसि (for the post. half). ]

—After 34, M3 reads $39^{cd}$, $38^{ab}$, 36 and $39^{cd}$ (r.) (including star passages).

35 For sequence in V1, cf. v.l. 30. Ś1 D2.7 G1 M3 om. $35^{ab}$ (for Ś1 D2, cf. v.l. 33). D4 om.(hapl.) 35 and 36. Ñ1 V2 om.(hapl.) 35. B3 reads $35^{ab}$ (including star passages) after 33. D3 transp. $^{ab}$ and $^{cd}$. —$^{b}$) T3 हंतुम् (for हर्तुम्). —After $35^{ab}$, Ñ2 B1.3.4 ins. :

897* यो रामस्य प्रियां भार्यां मामितो नेतुमिच्छसि ।

[ D3 स्वपुरीं (for मामितो). B1 बलात्त्वं हर्तुमिच्छसि (for the post. half). ]

—B3 cont.; D5 ins. after $35^{ab}$ :

898* यो रामस्य प्रियां भार्यां पापबुद्ध्या निरीक्षसे ।

[ D5 निरीक्ष्यसे. ]

—Thereafter B3 (further) D5 cont. 902*.

—After $35^{ab}$, T3 ins. the line of $39^{cd}$. —D5 om. (hapl.) $35^{c}$–$37^{d}$; T3 om. (hapl.) $35^{cd}$. —$^{c}$) V1 Dg1 Dt1 D3.6–8 T2 G1.2 M कालकूट- (for °टं). —After 35, V1 B4 ins. :

899* यो रामस्य प्रियां भार्यां स्वपुरीं नेतुमिच्छसि ।

[ V1 पुरीं नेतुं त्वमिच्छसि (for the post. half). ]

—After 35, B3 reads $36^{cdef}$, while D1 reads 34 ($^{ab}$ and $^{cd}$ transp.); whereas T2 reads for the first time $38^{cd}$, repeating it in its proper place.

36 For sequence in M3, cf. v.l. 34. D4.5 om. 36, cf. v.l. 35). G1 om. (hapl.) 36–$37^{b}$. M2 reads 37, $38^{ab}$ and 36 after 39. V2 illeg. for $36^{ab}$. —$^{a}$) G3 अक्ष्णौ (for अक्षि). Ś1 D1–3 G3 विमृशसि (for प्रमृजसि). Ñ1 अक्षिणी ह्यंजसे सूच्या. —$^{b}$) Ś1 लिह्यसि; Ñ1 लिह्से; D1–3 लिहसि; M2 लेहि च (for लेढि च). —For $36^{ab}$, Ñ2 V1 B1.3.4 D7 subst. :

900* त्वं क्षुरं जिह्वया लेक्षि सूच्या स्पृशसि लोचने ।

[ V1 त्वं क्षुरांकया लेक्षि (subm.) (for the prior half). V1 B1 लोचनं (for °ने). ]

—After $36^{ab}$, Ñ1 reads $39^{cd}$, 908*, $39^{ab}$ and 38. —After $36^{ab}$, M1 ins.; while Ñ1 after $37^{ab}$, G1 after 38 and M3 ins. after $38^{ab}$ :

901* दृष्ट्वा विषं महाघोरमङ्गुल्या तुदसे भृशम् ।

[ Ñ1 मुखे (for भृशम्). ]

—D1.2 om. $36^{c}$–$37^{d}$; D3 om. $36^{cd}$. —$^{c}$) Ś1 श्रीरामस्य; Ñ2 V1 B1.3.4 D7 G2 M1 यो रामस्य (for राघवस्य). —$^{d}$) Ś1 अपहर्तुं; M3 अभिगंतुं (for अधिगन्तुं). Ñ1 योभिहर्तुमिहेच्छसि; Ñ2 V1 B1.3.4 D7 पापबुद्ध्या निरीक्ष्य( B4 °क्ष )से. —After 36, Ś1 Ñ2 V1 B1.4 D7 M3 ins.; B3 D5 cont. after 898*; D1–3 ins. after 37 :

902* व्याघ्रयास्तरुणपुत्रायाः प्रजामादातुमिच्छसि ।

[ D1 पुत्रम् (for प्रजाम्). M3 इच्छति (for इच्छसि). ]

—Ś1 D1.2 cont. :

903* सिंहं सुप्तं वने दुर्गे मौर्ख्याद्बोधयसे तदा ।

[ D1 om.(hapl.) from. दुर्गे up to $40^{a}$. D2 दुर्गं. ]

—Ñ2 V1 B1.3.4 D7 cont. :

904* यो रामस्य प्रियां भार्यां विध्वंसयितुमिच्छसि ।

G. 3. 53. 52
B. 3. 47. 42
L. 3. 52. 0

अवसज्य शिलां कण्ठे समुद्रं तर्तुमिच्छसि ।
सूर्याचन्द्रमसौ चोभौ पाणिभ्यां हर्तुमिच्छसि ।
यो रामस्य प्रियां भार्यां प्रधर्षयितुमिच्छसि ॥ ३७

अग्निं प्रज्वलितं दृष्ट्वा वस्त्रेणाहर्तुमिच्छसि ।
कल्याणवृत्तां रामस्य यो भार्यां हर्तुमिच्छसि ॥ ३८

अयोमुखानां शूलानामग्रे चरितुमिच्छसि ।
रामस्य सदृशीं भार्यां योऽधिगन्तुं त्वमिच्छसि ॥ ३९

यदन्तरं सिंहशृगालयोर्वने
यदन्तरं स्यन्दनिकासमुद्रयोः ।
सुराग्र्यसौवीरकयोर्यदन्तरं
तदन्तरं दाशरथेस्तवैव च ॥ ४०

यदन्तरं काञ्चनसीसलोहयो-
र्यदन्तरं चन्दनवारिपङ्कयोः ।
यदन्तरं हस्तिबिडालयोर्वने
तदन्तरं दाशरथेस्तवैव च ॥ ४१

**37** For sequence in V1 M2, cf. v.l. 30 and 36. D1.2.5 om. $37^{abcd}$; G1 om. $37^{ab}$ (for D5, cf. v.l. 35 and for D1.2 G1, 36). Ś1 M3 om. (M3 hapl.), V2 illeg. for 37. Ñ1 D3 transp. $37^{ab}$ and $37^{cd}$. Dg1 T3 repeat $37^{ab}$ after 37. —$^{a}$) Ñ2 B1 अवसह्य; V1 आसज्य च; D3 अवबध्य (for अवसज्य). —$^{b}$) Ñ1 सागरे; Ñ2 V1 B1.3.4 D3.7 सागरं (for समुद्रं). —After $37^{ab}$, Ñ1 ins. 901*; while T3 (second time) ins. the line of $39^{cd}$. —After $37^{ab}$, Ñ2 B1.3.4 ins.:

905* रामस्य दयितां भार्यां यस्त्वं हर्तुमिहेच्छसि ।

[ D3 धर्षयितुम् (for यस्त्वं हर्तुम्). ]

—D7 om. (hapl.) $37^{cd}$. Ñ2 reads $37^{cdef}$ after 893*; while B3 reads $37^{cdef}$ after 35. —$^{c}$) Ñ V1 B1.3.4 D3 देवौ (for चोभौ). —$^{d}$) V1 B1.3.4 Dm1 D3.8 G2.3 पाणिना (for °भ्यां). Ñ V1 B1.3.4 D3 स्प्रष्टुम् (for हर्तुम्). —D5 reads $37^{ef}$ twice (second time as in Ñ2) after 33. —$^{e}$) D7 G1 रामस्य दयितां (G1 सदृशीं) भार्यां. —$^{f}$) Ñ2 V1 B1.3.4 बलात्त्वं हर्तुमिच्छसि; Dg1 T3 G2 अधिगंतुं त्वमिच्छसि; D1.2 अपहर्तुं त्वमर्हं (D2 °मिच्छ )सि; D3 अपहर्तुमिहेच्छसि; D5.7 यस्त्वं हर्तुमिहेच्छसि; G1 यस्त्वं धर्षितुमिच्छसि; M2 प्रसन्नयितुमिच्छसि. —After 37, Ñ2 reads 895*; Dg1 T3 repeat $37^{ab}$; while D5 reads 895* after $37^{ef}$ (r.). —After 37, Dm1 reads $39^{ab}$; while D1-3 ins. 902*.

**38** For sequence in Ñ1 M2.3, cf. v.l. 34 and 36. V1 T3 om. (hapl.) 38. D4 G1 om. (hapl.) $38^{ab}$. Ś1 D1.2 read $38^{ab}$ after 32. Ñ2 B1.3.4 D5.7 transp. 38 and 39. D3 reads $38^{ab}$ after 33. D8 reads $38^{ab}$ after $39^{ab}$. —$^{ab}$) Ñ2 V2 B1.3.4 D5.7 बद्ध्वा; T1 स्पृष्ट्वा; G3 कृत्वा; M2 दीप्तं (for दृष्ट्वा). Ñ2 V2 B1.3.4 D5.7 वस्त्रांते नेतुम् (for वस्त्रेणाहर्तुम्). Ś1 D1-3 पावकस्य समिद्धस्य शिखां त्वं स्प्रष्टुमिच्छसि. —After $38^{ab}$, M3 ins. 901*. —T2 repeats $38^{cd}$ here (cf. v.l. 35). Ś1 om. $38^{c}$-40. D1 om. $38^{c}$-$40^{a}$, D2.3 om. (hapl.) $38^{c}$-39. M3 om. (hapl.) $38^{c}$-$39^{b}$. —$^{c}$) Dt1 D6 T2 यो भार्यां (for रामस्य). —$^{d}$) V2 D5.7 भार्यां यो (by transp.). Dt1 D6 T2 रामस्याहर्तुमिच्छसि. —After 38, Ñ1 ins.:

906* ******** ** स्वमभिकाङ्क्षसे ।;

while Ñ2 B1.3.4 D5.7 ins.; V1 ins. after 39:

907* कृष्णसर्पमतिक्रुद्धं श्वसन्तं त्वं महाविषम् ।
स्प्रष्टुमिच्छसि हस्तेन यन्मां त्वमनुकाङ्क्षसे ।

[ (l. 1) Ñ2 D5.7 तु; B3 om. (for त्वं). V1 वमंतं तु; G (ed.) निश्वसंतं (for श्वसन्तं त्वं). —(l. 2) V1 B1.3.4 अभिकांक्षसि (B4 °से) (for अनुकाङ्क्षसे). ]

—After 38, G1 ins. 901*.

**39** For sequence in Ñ1 M2.3, cf. v.l. 34 and 36. Ś1 D1-3 om. 39; M3 om. $39^{ab}$ (for all, cf. v.l. 38). V2 illeg. for 39-41. Ñ2 B1.3.4 D5.7 transp. 38 and 39. Dg1 transp. $^{ab}$ and $^{cd}$ and repeats $39^{cd}$ in its proper place. Dm1 reads $39^{ab}$ after 37. —$^{b}$) Dt1 D6 T3 मध्ये (for अग्रे). B4 भवितुम्; Dg1 पतितुम् (for चरितुम्). Ñ1 अग्रेषु परिवर्तसे. —After $39^{ab}$, D8 reads $38^{ab}$. —G1 om. (hapl.) $39^{cd}$. —$^{c}$) T2 G2 M3 दयितां (for सदृशीं). —$^{d}$) Dm1 D8 G3 [ ऽ]भिगंतुं (for ऽधि°). Ñ1 योभिहर्तुमिहेच्छसि; Ñ2 V1 B4 D5.7 यदि त्वं नेतुमिच्छसि; B1 यदितो नेतुमिच्छसि; B3 पापबुद्ध्या निरीक्षसे. —After 39, Ñ1 ins.:

908* *** पुत्रपुत्रायाः प्र*माहर्तुमिच्छसि ।;

while V1 ins. 907* after 39.

**40** Ś1 om. 40; D1 om. $40^{a}$ (cf. v.l. 38). V2 illeg. for 40 (cf. v.l. 39). —$^{b}$) ❀ Cr.m.g : स्यन्दिनिका क्षुद्रनदी. ❀ —B1.3 om. $40^{cd}$. Dg1 reads $40^{c}$-$41^{b}$ in marg. —$^{c}$) Ñ1 D1-3 सुराष्ट्र-; V1 सुवृष्टि-; Ñ2 B4 D4 M3 सुराग्र-; G2 सुराश-; Cr.m.g.k.t as in text (for सुराग्र्य-). —D5.6 om. (D5 hapl.) $40^{d}$-$41^{b}$. —$^{d}$) T3 तथा (for तव). Ñ1 तदंतरं रावण राघवस्य ते; Ñ2 D7 तदंतरं ते रघुनंदनस्य च; B4 Dm1 D1.2.8 T1 G1.2 M तदंतरं वै तव राघवस्य च (D8 T1 *); D3 तदंतरं तुभ्यं च राघवस्य च.

**41** V2 illeg. for 41 (cf. v.l. 39). D5.6 om. $41^{ab}$; Dg1 reads $41^{ab}$ in m. (for all, cf. v.l. 40). T3 om.

यदन्तरं वायसवैनतेययो-
र्यदन्तरं मद्गुमयूरयोरपि ।
यदन्तरं सारसगृध्रयोर्वने
तदन्तरं दाशरथेस्तवैव च ॥ ४२

तस्मिन्सहस्राक्षसमप्रभावे
रामे स्थिते कार्मुकबाणपाणौ ।
हृतापि तेऽहं न जरां गमिष्ये
वज्रं यथा मक्षिकयावगीर्णम् ॥ ४३

इतीव तद्वाक्यमदुष्टभावा
सुदुष्टमुक्त्वा रजनीचरं तम् ।
गात्रप्रकम्पाद्व्यथिता बभूव
वातोद्धता सा कदलीव तन्वी ॥ ४४

तां वेपमानामुपलक्ष्य सीतां
स रावणो मृत्युसमप्रभावः ।
कुलं बलं नाम च कर्म चात्मनः
समाचचक्षे भयकारणार्थम् ॥ ४५

G. 3. 53. 62
B. 3. 47. 50
L. 3. 52. 42

इति श्रीरामायणे अरण्यकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

---

(hapl.) 41. B3 reads 41 in marg. —[a]) Ñ1 D3 -कृष्ण-; Ñ2 V1 B1.3.4 D7 -नील- (for -सीस-). D4 G1 -सीसयोर्द्वयोर् (for -सीसलोहयोर्). —[b]) V1 यदंतरं स्यंदनिकासमुद्गयोः (=40[b]). —D4 om. (hapl.) 41[c]; Ñ1 transp. [c] and [d]. —[c]) D5 तद् (for यद्). V1 विराडयोर्; G1.2 M2.3 बि(M2.3 वि)लाळयोर् (for बिडालयोर्). Ñ2 V1 B1.3 D5.7 भवेत् (for वने). —[d]) D4 यद् (for तद्). Dt1 D6 G2 तथा (for तव). Ś1 D1 तदंतरं वै तव राघवस्य च; Ñ1 तदंतरं रावण राघवस्य च; Ñ2 B1.3.4 D5.7 तदंतरं स्यात्तव राघवस्य च; V1 तदंतरं ते रघुनंदनस्य च. —After 41, Ñ(Ñ1 after 42[b]) ins.; D1.3 ins. after 42:

909* यदन्तरं ब्राह्मणशूद्रयोः क्षितौ
यदन्तरं भास्करतारयोर्दिवि ।
यदन्तरं श्येनसुपर्णयो रणे
तदन्तरं दाशरथेस्तवैव च ।

[Ñ1 transp. l. 1-2 and 3-4. —(l. 1) D1 -क्षत्रिययोर् (for -शूद्रयोः क्षितौ). —(l. 2) Ñ1 illeg. for भास्कर-. —D1 om. l. 3-4. —(l. 3) D1 यदंतरं वै तव राघवस्य तु; D3 यदंतरं सारसगृध्रयोर्वने (= 42[c]). —(l. 4) Ñ1 D3 तदंतरं तुभ्यं च राघवस्य च.]

42 D4 om. (hapl.) 42; Ñ2 om. (hapl.) 42[ab]; Ñ1 om. (hapl.) 42[a]. —[b]) Ś1 D1-3 यदंतरं काकमयूरयोर्वने; Ñ2 यदंतरं बर्हिण*जरीटयोः (sic); V1 B1 यदंतरं बर्हिणकाक (B1 °पार)योर्भवेत्; B3 D5.7 यदंतरं बर्हिणला(B3 °ना)वयोर्भवेत्; B4 यदंतरं बर्हिबलाकयोर्वने. —After 42[b], Ñ1 ins. 909*. —[c]) Ñ2 तद् (for यद्). Dt1 D8 हंसक- (for सारस-). Ñ1 -कोकयोर् (for -गृध्रयोर्). Ñ2 V B1.3.4 D2.5.7 भवेत् (for वने). —V2 illeg. for [d]. —[d]) Dt1 D6 G2 तथा (for तव). Ñ1 illeg. for वैव च. Ś1 D1 तदंतरं वै तव राघवस्य च; Ñ2 V1 B1.4 D5.7 तदंतरं ते रघुनंदनस्य च (B1 तु); B3 तदंतरं स्यात्तव राघवस्य च; D2.3 तदंतरं तुभ्यं च राघवस्य च. —After 42, D1.3 ins. 909*.

43 [a]) Ñ1 illeg. up to हृ. V1 B3 यस्मिन् (for तस्मिन्). V1 -समप्रभावे (for °प्रभावे). —[b]) Ś1 D1-3 रण(D2 °णे)स्थिते राक्षस चंडवेगे(D1 चंडवैरिणि). —[d]) Ś1 D2 वज्रो; B3 Dt1 D6.8 Ct आज्यं; Cv.r.m.g.k as in text (for वज्रं). ❀ Cv : वज्रं रत्नविशेषशकलम् ।; Cr. m : वज्रं रत्नविशेषः । अवगीर्णं ग्रस्तं तण्डुलखण्डरूपं मक्षिकया ग्रस्यते । यद्वा वज्रमाज्यं वज्रो वा आज्यमिति श्रुतेः ।; Cg : वज्रं हीररत्नं मक्षिकया तण्डुलखण्डभ्रान्त्या ग्रस्तं हीररत्नमित्यर्थः । यथा न जीर्णं भवति । यद्वा मक्षिकया सदावगीर्णं भुक्तं वज्रमाज्यम् । "वज्रो वा आज्यम्" इति श्रुतेः । यथा न जीर्णं भवतीत्यर्थः । तथा अहं त्वया हृतापि ते जीर्णतां न गमिष्ये न गमिष्यामि । प्रत्युत तवैव मरणं प्रापयिष्यामीत्यर्थः. ❀ Ś1 Ñ V B1.3.4 D1.3.5.7 निगीर्णं(Ś1 °र्णः); Dg1 D4 विगीर्णं; D2 निकीर्णः; G3 M2.3 [अ]वकीर्णं; Cv [अ]वशीर्णं (for [अ]वगीर्णम्). —After 43, Ñ2 V1 B1.3.4 D2.5.7 ins.:

910* शक्या शची वज्रधरस्य हर्तुं
शिखापि वा दीप्तशिखस्य वह्नेः ।
स्थाणोरुमा वा जगदीश्वरस्य
नाहं त्वया रावण राघवस्य ।

[(l. 2) B4 स्वाहापि (for शिखापि). —(l. 4) V1 न हि (for नाहं).]

44 [a]) Ś1 Ñ1 इत्येव तद्; B1 इतीव तं; B3 इतीरितं (for इतीव तद्). —[b]) Ś1 D2 सुरूक्षम्; Ñ1 प्रदुष्टम्; D1 सुकष्टम् (for सुदुष्टम्). V1 B4 Dm1 D3.4.7 उक्ता; T3 उक्तं; Cg as in text (for उक्त्वा). Ś1 D1.2 रजनीचरस्य; Ñ2 V B1.3.4 D5.7 °चरेण; G3 °चरेंद्रं; M2 °चरेशं (for रजनीचरं तम्). —[c]) Ś1 D1.2 गात्रप्रकंपैर्; D3.4 G1 M1.3 °प्रकंप- (for °प्रकम्पाद्). Ñ2 V B1.3.4 D5.7 प्र(B1 इ)त्युच्य(B3 °त्येत्य) सीता व्यथिता चकंपे. —[d]) Ś1 स्पृष्ट्वेवमुक्ता; Ñ1 वातं प्रणुन्ना; Ñ2 V2 B1.3.4 D5.7 छिन्नेव मुक्ता; V1 दृष्ट्वेव मुक्ता; Dg1 T3 वाताहता सा; D1-3 स्पृष्ट्वेव(D3 °ष्ट्वेन) मुक्ता (for वातोद्धता सा). Ś1 Ñ2 V B1.3.4 D1-3.5.7 गजेन (for [इ]व तन्वी).

45 [a]) Ñ1 अवधार्य; Ñ2 V2 B1.3.4 D5.7 अभिवीक्ष्य; V1

# ४६

G. 3. 54. 1
B. 3. 48. 1
L. 3. 53. 0

एवं ब्रुवत्यां सीतायां संरब्धः परुषाक्षरम् ।
ललाटे भ्रुकुटीं कृत्वा रावणः प्रत्युवाच ह ॥ १
भ्राता वैश्रवणस्याहं सापत्न्यो वरवर्णिनि ।
रावणो नाम भद्रं ते दशग्रीवः प्रतापवान् ॥ २
यस्य देवाः सगन्धर्वाः पिशाचपतगोरगाः ।
विद्रवन्ति भयाद्भीता मृत्योरिव सदा प्रजाः ॥ ३
येन वैश्रवणो भ्राता वैमात्रः कारणान्तरे ।
द्वन्द्वमासादितः क्रोधाद्रणे विक्रम्य निर्जितः ॥ ४
मद्भयार्तः परित्यज्य स्वमधिष्ठानमृद्धिमत् ।
कैलासं पर्वतश्रेष्ठमध्यास्ते नरवाहनः ॥ ५
यस्य तत्पुष्पकं नाम विमानं कामगं शुभम् ।
वीर्यादावर्जितं भद्रे येन यामि विहायसम् ॥ ६

---

अवलोक्य; D1.2 T2 M1 उपलभ्य; D3 उपधार्य (for उपलक्ष्य). —b) Ś1 D1.2 मृत्युरिवोग्रतेजाः (D2 °तेजसा); Ñ1 illeg. after त्यु; D3 मृत्युरिवोग्ररूपः (for °समप्रभावः).—c) G2 बलं कुलं (by transp.). K(ed.) च स्वं (for चात्मनः). Ñ1 ** न्स चैव (illeg.); Ñ2 V B1.3.4 D5.7 तथैव वीर्यं (for च कर्म चात्मनः). Ś1 D2 कुलं बलं वीर्यमथापि चात्मनः; D1.3 कुलं बलं वीर्यमथापि नाम. —d) B4 D1–3 स्वम्; T2 M1 तदा (for सम्-).

Colophon. —*Sarga name*: Ś1 D2 रावणभर्त्सनं; Ñ1 D3 सीतावाक्यं; B3 सीतारावणसंवादः; D1 रावणनिर्भर्त्सनं. —*Sarga no.* (figures, words or both): Ś1 Ñ1 B1.3 D2 om.; Ñ2 D3.5.7 53; V1 52; V2 55; B4 54; Dg1 Dt1 Dm1 D6 T G2.3 M1.2 47; D1.4 49; D8 46; G1 37; M3 48. —After colophon, G concludes with श्रीरामाय नमः.

## 46

D8 begins with ॐ; T2 with श्रीरामचन्द्राय नमः; M1 with श्रीरामाय नमः.

1 Ś1 Ñ1 D1–3 om. 1. —a) B4 इति; G2 तथा (for एवं). Dg1 Dt1 D5.6 T1.2 G M1 Ck ब्रुवंत्यां (for ब्रुवत्यां). —b) D5.7 संरब्धं; G1 संक्रुद्धः; Cg.t as in text (for संरब्धः). Dt1 D4.6 T1 M2 Ct परुषं वचः; G2 पुरुषाक्षरं; M1 परुषाक्षरः. —c) Ñ2 V1 Dt1 Dm1 D4–6.8 T G1 भ्रुकुटिं. Ñ2 V B1.3.4 D5.7 बद्ध्वा (for कृत्वा). —d) Dg1 तां (for ह).

2 b) Ś1 Ñ2 V B3 Dg1 Dm1 D5.7 G2 M1 (before corr. as in text) Ct सापत्नो; Ñ1 सवर्णो-; Dt1 D6 सापत्न्ये; D3 संपन्नो (for सापत्न्यो). ❀ Ct : 'सापत्ने' इति पाठे मातृसपत्नीपुत्रत्वे प्रसिद्ध इत्यर्थः। भ्रातेत्यत्र च साक्षात् इति तदा पाठः। एतेन कुलप्राशस्त्यमुक्तम्. ❀ Dg1 Dt1 D4 G1.3 M2 वरवर्णिनी.

3 D2 om. 3. —a) Dg1 च (for स-). —b) Ś1 Dm1 D1.3.6.8 T2 G2.3 M3 पिशाचाः पत (Dm1 D8 पन्न) गोरगाः; Ñ1 पिशाचोरगदानवाः; Ñ2 B1.3 D5.7 सपिशाचाः सपन्नगाः (B3 [*sup. lin.* also] सकिंनराः); V पिशाचाश्च सपन्नगाः; B4 पिशाचाः सपन्नगाः (subm.). —c) Dt1 D6 सदाः; Dm1 D8 मया; Cg as in text (for भयाद्). Ñ2 V B1.3.4 D5.7 भद्रे (for भीता). —d) Ś1 सह-; Ñ1 यथा; Ñ2 V B1.3.4 D5.7 मम; G(ed.) मुखात् (for सदा).

4 a) Ś1 Ñ2 V B1.3.4 Dm1 D1.5.7.8 T1 G3 M1.2 राजा (for भ्राता). —b) Ś1 Dg1 Dm1 D1–4.8 T1.2 G M (M1 *inf. lin. sec. m.* also as in text) Cv.g.k द्वैमात्रः (M3 °त्रं); Ct as in text (for वैमात्रः). ❀ Cv : द्वैमात्रः सापत्नः ।; Cg : द्वयोर्मात्रोरपत्यं द्वैमात्रः सपत्नीपुत्र इत्यर्थः ।; Ck : द्वैमात्र इति। द्वितीया माता द्विमाता तस्यापत्यं द्वैमात्रः। मातुरुत्संख्येत्युत्वं न भवति। द्विशब्दस्येह संख्याप्राधान्याविवक्षणात् ।; Ct : वैमात्रः प्राग्वत्। 'द्वैमात्रः' इति पाठे द्वितीया माता द्विमाता। तदपत्यमित्यर्थे 'मातुरुत्' इत्युत्वाभाव आर्षः। अस्य द्विशब्दस्य द्विपूरणार्थत्वेऽपि संख्यार्थत्वाभावान्नोत्वमित्यन्ये. ❀ D6 कारणांतरं. —cd) D3 आसाद्य च (for °दितः). M1 कोपाद् (for क्रोधाद्). Ñ1 द्वंद्वयुद्धस्तव क्रोधात्; Ñ2 V2 B1.3.4 D5.7 क्रुद्धेन द्वंद्वमासाद्य (for c). Ñ1 ततो; Ñ2 V2 B1.3.4 D5.7 मया (for रणे). D3 स चाशु विनिपातितः (for d). Ś1 D1.2 द्वंद्वमासाद्य युद्धेन बलेनाशु विनिर्जि(Ś1 मया जि)तः; V1 क्रुद्धेन युद्धमासाद्य मयाक्रम्य विनिर्जितः.

5 a) Ś1 Ñ1 D1–3 मद्भयाच्च; Ñ2 V B1.3(*sup. lin.* also).4 D5.7 म(B1.3[orig.] य)द्भयात्सं-; Dm1 मद्भयात्तत् (for मद्भयार्तः). —b) D3 ऋद्धिमान्. —c) Ś1 कैलासपर्वतं श्रेष्ठम्.

6 a) Ś1 B1 तस्य (for यस्य). V1 यत्; B1 [ए]तत्; M2 तं (for तत्). —b) Ś1 Ñ2 V B1.3.4 D1–3.5.7 महत्; Ñ1 मया (for शुभम्). —c) V1 T1 एवार्जितं; B1 इव जितं; B3 (after corr. *sec. m.* as in text) G2 M3 अवजितं; Dg1 D4 T2.3 M1 उपार्जितं; Dm1 D8 आवर्तितं; G1 M2 अपहृतं; Ct as in text (for आवर्जितं). D4 भद्रं. Ś1 D1–3 वीर्येण विजितं (D1 निर्जितं; D2 विहितं) भद्रे. —d) L(ed.) तेन (for येन). Ś1 Ñ V B1.3.4 D1–3.5.7 M2 विहायसा (for °सम्).

पिङ्गाक्षास्तां विशालाक्षीं नेत्रैरनिमिषैरिव ।
विक्रोशन्तीं तदा सीतां ददृशुर्वानरर्षभाः ॥ ४
स च पम्पामतिक्रम्य लङ्कामभिमुखः पुरीम् ।
जगाम रुदतीं गृह्य मैथिलीं राक्षसेश्वरः ॥ ५
तां जहार सुसंहृष्टो रावणो मृत्युमात्मनः ।
उत्सङ्गेनैव भुजगीं तीक्ष्णदंष्ट्रां महाविषाम् ॥ ६
वनानि सरितः शैलान्सरांसि च विहायसा ।
स क्षिप्रं समतीयाय शरश्चापादिव च्युतः ॥ ७
तिमिनक्रनिकेतं तु वरुणालयमक्षयम् ।
सरितां शरणं गत्वा समतीयाय सागरम् ॥ ८

G. 3. 60. 18
B. 3. 54. 9
L. 3. 60. 9

1024* भूषणानि विधुन्वन्ती तेषां मध्ये वनौकसाम् ।

[ Ś1 विनिघ्नंती; D1 विचि° ( for विधुन्वन्ती ). ];

while Ñ2 V1 B1.3.4 D5.7 subst. for $3^{ab}$ :

1025* वस्त्रं सभूषणं क्षिप्रं तेषां मध्ये न्यपातयत् ।

—$^c$ ) Ś1 Dg1 D1.2 T3 संभ्रमाच्च; Ñ2 D5.7 °मार्तो; B3.4 संभ्रांतस्तु; Dt1 स भ्रमात्तु; D3 स्वदेहाच्च; M2 स संभ्रमाद् ( for संभ्रमात्तु ). —$^d$ ) Dt1 Dm1 D4.6.8 T1 च न ( by transp. ); T2 न वि-; Cr.k as in text; K( ed. ) न स ( for न च ). Ś1 D1-3 वै( D1 * )देहीं नोपलब्धवान् ; Ñ2 V1 B1.3.4 D5.7 सीतां नैवाव( V1 नैव वि; D5 नोवाच )बुद्धवान् . —After 3, Ñ2 V B1.3.4 D5.7 M3 ins. :

1026* भूषणानि हि सर्वाणि दिव्यं चूडामणिं विना ।
विसृजन्तीं वरारोहां तदा वानरसंनिधौ ।

[ ( l. 1 ) V1 M3 च ( for हि ). M3 मुख्यानि ( for सर्वाणि ). —V2 illeg. from दिव्यं in the post. half up to रिव in $4^b$. M3 पुण्य- ( for दिव्यं ). —M3 om. l. 2. ]

**4** V2 illeg. for $4^{ab}$ ( cf. v.l. 3 ). —$^a$ ) Ś1 ततस्तेपि; Ñ2 V1 B1.3.4 D1-5.7 °क्षा( D2 °क्षया )स्ते; G3 पिंगाक्षिस्तां ( sic ) ( for पिङ्गाक्षास्तां ). —$^b$ ) Ś1 B1 D2.3 अपि ( for इव ). —$^c$ ) Ś1 D2 विवे( D2 °चे )ष्टंतीं; ( for विक्रोशन्तीं ). Dg1 Dm1 D4 T1 G3 M1 Cg तथा सीतां; D3 lacuna; G1 तदा दीनां ( for तदा सीतां ). —$^d$ ) Dt1 D8 वानरोत्तमाः. —After 4, Ñ2 V B1.3.4 D5.7 ins. :

1027* तस्या विचेष्टमानायाः शस्तं तद्वस्त्रमुत्तमम् ।
स्रजश्च विविधाश्छिन्नाः पेतुराभरणानि च ।
तानि वै कलधौतानि पावकार्चिर्निभानि च ।
नक्षत्रविमलाभानि निपेतुर्गिरिसानुषु ।
संभ्रमात्तु दशग्रीवो वैदेहीं नोपलब्धवान् । [5]
भूषणानि विधुन्वन्तीं तेषां मध्ये वनौकसाम् ।
ऋष्यमूकं च दृष्ट्वा स पम्पां चैव निशाचरः ।
उपलभ्य दिशं तत्र चकार गमने मतिम् ।

[ ( l. 1 ) Ñ2 D5.7 तथा ( for तस्या ). —V2 illeg. from शस्तं in the post. half up to निपेतुर् in the post. half of l. 4. Ñ2 V1 B1 D5.7 स्रस्तं ( for शस्तं ). B1 वनम् ( for वस्त्रम् ). —( l. 3 ) Ñ2 चैव ( hypm. ) ( for वै ). Ñ2 D5.7 -[ अ ]र्कै- ( for -[ अ ]र्चि- ). —( l. 5 ) V1 च ( for तु ). —V2 illeg. from लब्धवान् in the post. half up to मध्ये in the post. half of l. 6. —( l. 7 ) Ñ2 B1 D5.7 तु ( for च ). B1 तं दृष्ट्वा ( for दृष्ट्वा स ). —( l. 8 ) B1.3 दिशस् ( for दिशं ). —V2 illeg. from तत्र up to मतिम्. ]

**5** $^a$ ) Ś1 Ñ2 V B1.3.4 Dg1 D2.5.7 T3 तु ( for च ). Ś1 पन्नयाम् ; M2 ( after corr. *sec. m.* as in text ) पुंसाम् ( for पम्पाम् ). T2 अभिक्रम्य. D1.3 स च तां समति( D3 समभि )क्रम्य. —$^b$ ) Dt1 अभिमुखं; D3 °गतः; G3 °मतः ( for अभिमुखः ). G2 ततः ( for पुरीम् ). —V2 illeg. from जगाम in $^c$ up to तीक्ष्ण in $6^d$. —$^{cd}$ ) Ś1 D2 बाहुना; D1.3 तां तथा ( for जगाम ). Dm1 D6.8 मैथिलीं; T2 महतीं ( for रुदतीं ). Ñ2 V1 B1.3.4 D5.7 जगामादाय रुदतीं ( for $^c$ ). Dg1 वैदेहीं; Dm1 D6.8 रुदतीं ( for मैथिलीं ). Dt1 transp. रुदतीं and मैथिलीं. Ñ2 B1 D1.5.7 राक्षसाधिपः; B3.4 °सोत्तमः ( for °सेश्वरः ).

**6** V2 illeg. up to तीक्ष्ण in $6^d$ ( cf. v.l. 5 ). —$^a$ ) Ś1 D1-3 transp. तां and जहार. D3 च ( for सु- ). Ś1 तदा सीतां; Ñ2 सुसंतुष्टो; D5 सु * * ष्टो ( for सुसंहृष्टो ). —$^b$ ) Ś1 ददृशुर् ( sic ); D1.2 रूपिणीं ( for रावणो ). —Ś1 om. $6^c$–7. —$^{cd}$ ) V1 Dt1 Dm1 D3.5-8 T1.3 G1.2 [ इ ]व ( for [ ए ]-व ). Ñ2 V1 B1.3.4 D5.7 महादंष्ट्रां; D4 °भोगां ( for तीक्ष्ण-दंष्ट्रां ). G3 M2( after corr. *sec. m.* as in text ) महाभुजां ( for °विषाम् ). D1.2 उत्संगेनैव( D2 °नेति ) भुजगं महादंष्ट्रं महाविषं.

**7** Ś1 om. 7 ( cf. v.l. 6 ). —$^a$ ) Dg1 T3 सरांसि ( for वनानि ). G2 चैव ( for शैलान् ). —$^b$ ) Dg1 T3 वनानि ( for सरांसि ). —$^c$ ) D3 समतीत्याशु ( for °याय ). Ñ2 V B1.3.4 क्षिप्रं समभि( B1 °ति )चक्राम( V2 °* * [ illeg. ] ); D1.2 पश्यं-स्तूर्णमतीयाय. —V2 illeg. from शर in $7^d$ up to वरुणाल in $8^b$. —$^d$ ) Ñ2 V1 B1.3.4 D1-3.5.7 चापाच्छर इव ( by transp ). —After 7, Ñ2 V1 B1.3.4 D5.7 read 10.

**8** V2 illeg. up to वरुणाल in $^b$ ( cf. v.l. 7 ). —$^a$ ) Ś1 D2 मीननक्राकु( D2 तिमिनक्रातु )लं तं तु. —V2 illeg. from $8^c$ to l. 1 of 1029*. —$^c$ ) Dm1 D8 G1.2 ( after corr. *inf. lin. sec. m.* ) M2 रम्यं; D4 गम्यं; G3 गृह्य ( for गत्वा ). Ś1 D1-3 सरितः समतिक्रम्य; Dg1 T3 सरितां पतिमासाद्य. —$^d$ ) D3 शनैरुत्तीर्य सागरं. —For $8^{cd}$, Ñ2 V1 B1.3.4 D5.7 subst. :

1028* क्षणेनैवातिचक्राम सागरं सरितां पतिम् ।

[ D7 क्षणे चैव. V1 [ अ ]नि- ( for [ अ ]ति- ). ]

G. 3. 60. 19
B. 3. 54. 9
L. 3. 60. 10

संभ्रमात्परिवृत्तोर्मी रुद्धमीनमहोरगः ।
वैदेह्यां ह्रियमाणायां बभूव वरुणालयः ॥ ९
अन्तरिक्षगता वाचः ससृजुश्चारणास्तदा ।
एतदन्तो दशग्रीव इति सिद्धास्तदाऽब्रुवन् ॥ १०
स तु सीतां विवेष्टन्तीमङ्केनादाय रावणः ।
प्रविवेश पुरीं लङ्कां रूपिणीं मृत्युमात्मनः ॥ ११
सोऽभिगम्य पुरीं लङ्कां सुविभक्तमहापथाम् ।
संरूढकक्ष्याबहुलं स्वमन्तःपुरमाविशत् ॥ १२
तत्र तामसितापाङ्गीं शोकमोहपरायणाम् ।
निदधे रावणः सीतां मयो मायामिवासुरीम् ॥ १३
अब्रवीच्च दशग्रीवः पिशाचीर्घोरदर्शनाः ।
यथा नैनां पुमान्स्त्री वा सीतां पश्यत्यसंमतः ॥ १४
मुक्तामणिसुवर्णानि वस्त्राण्याभरणानि च ।
यद्यदिच्छेत्तदेवास्या देयं मच्छन्दतो यथा ॥ १५

---

9 V2 illeg. for 9 (cf. v.l. 8). —$^a$) Ñ2 V1 B1.3.4 D5.7 सधूम-(V1 B1.3.4 °मः) (for संभ्रमात्). V1 इव वृत्तोर्मि-; Dg1 Dt1 Dm1 D1.2.6.8 परिवृत्तोर्मि-; D4 M3 °वृद्धोर्मी (for परिवृत्तोर्मी). —$^b$) Ś1 V1 B1.4 D1.2 क्रुद्ध-; Ñ2 D3.5.7 क्षुब्ध-; G3 कूर्म- (for रुद्ध-). D1 -महोरगं (for °रगः). M3 रुद्धमीनमिवोरगः. —$^d$) B3.4 मकरालयः.

10 V2 illeg. for 10 (cf. v.l. 8). Ñ2 V1 B1.3.4 D5.7 read 10 after 7. —$^a$) B1.3 D7 अंतरीक्षगता. —$^b$) Ś1 D1-3 दारुणास् (for चार°). V1 G3 ततः; B1 Dg1 Dt1 D6 T2.3 M1.2 तथा (for तदा). —$^c$) L(ed.) एतदंतं. —$^d$) D6 G2 M1 तथा (for तदा). Ñ2 V1 B1.3.4 D5.7 इति हृष्टतनूरुहाः; D3 इति सिंहास्तमब्रुवन्. ❀ Cv : स्निग्धास्तथाऽब्रुवन्। सिद्धाश्च तथाऽब्रुवन्. ❀

11 $^a$) Dt1 Dm1 D1-4.6.8 G1 विचेष्टंतीम्; M3 प्रवे° (for विवेष्टन्तीम्). —$^c$) Ś1 D2.3 प्रावेशयत् (for प्रविवेश). T2 प्रावेशत तदा लंकां. —$^d$) Ś1 विशंको; D1.8 रूपिणं (for रूपिणीं). —For 11, Ñ2 V B1.3.4 D5.7 subst. :

1029* स सागरमतिक्रम्य लङ्कामासाद्य रावणः ।
विवेशादाय तां वेश्म सीतां मृत्युमिवात्मनः ।

[ V2 illeg. up to l. 1 (cf. v.l. 8). —(l. 2) B3 G(ed.) शीघ्रं (for वेश्म). V1 B1 विवेशालयमासाद्य (B1 °दाय) (for the prior half). B4 मृत्युर् (for मृत्युम्). ]

12 V2 illeg. from पु in 12$^a$ up to घो in 14$^b$. —$^a$) Ñ2 प्रविश्य च; V B1.3.4 D5.7 स प्रविश्य (V2 °* illeg.); D8 सोपि गम्य; T2 सोधि° (for सोऽभिगम्य). Ś1 D2 दिव्यां (for लङ्कां). —$^b$) Ś1 D2 प्रविभक्त-; M3 °भक्तां (for सुविभक्त-). —Ś1 Ñ2 V1 B1.3.4 D1-3.5.7 om. 12$^c$-13$^b$. —$^c$) Dg1 -कक्षा-; T2 -कक्ष्यां (for -कक्ष्या-). Dt1 Dm1 (after corr. *sec. m.*) T1 Ct संरूढकक्ष्यां बहुलां (Dm1 [before corr.] °लं); Cv.g.t*p* as in text.

13 V2 illeg. for 13; Ś1 Ñ2 V1 B1.3.4 D1-3.5.7 om. 13$^{ab}$ (for both, cf. v.l. 12). —$^a$) T1.2 G M1 असितापांगां (for °पाङ्गीं). —$^b$) Dt1 D6 -समन्वितां; T2 -परायणः (for -परायणाम्). —$^c$) Ś1 D1.2 निदध्यौ; B1 Dg1 विदधे; D3 निर्दयो; Cg as in text (for निदधे). —$^d$) D1.4 G3 मय- (for मयो). B1 मायां मय (by transp.). Ś1 [अं]बरे; Ñ2 V1 B1.3.4 D5.7 [अ]सुरः; K(ed.) Cg स्त्रियं (for [आ]सुरीम्).

14 V2 illeg. up to घो in $^b$ (cf. v.l. 12). —$^a$) Ś1 D1.2 अथाब्रवीद्; M1 °त्तु; G(ed.) संदिदेश (for अब्रवीच्च). —$^b$) Dt1 पिशाचा; D1 °च्यो; D4 राक्षसीर् (for पिशाचीर्). —After 14$^{ab}$, Ñ2 V B1.3.4 D5.7 ins. :

1030* रक्षणार्थं समाहूय वैदेह्या राक्षसेश्वरः ।
कृताञ्जलिपुटाः सर्वाः सहिताः पुरतः स्थिताः ।

[ (l. 1) B4 रक्षणाय. —(l. 2) V2 illeg. from पुरतः up to मतः in 14$^d$. D7 om. पुरतः. ]

—$^c$) Dt1 मैनां; Dm1 D8 T1 G M1.2 Cv.g.k नेमां; D1 मे न; Cm as in text (for नैनां). G2 पुमान् in marg. —$^d$) Ñ2 V1 B1.3.4 D5.7 पश्येद् (for पश्यति). T1 [अ]संमतं (for °मतः). D1 सीतां पश्येत दर्शने. —For 14$^{cd}$, Ś1 D2.3 subst. :

1031* यथा मां मत्स्त्रियं तद्वत्सीतां पश्यत संमताम् ।

[ D2 यथा मानरतु मां स्त्री वा (sic) (for the prior half) and संमताः (for °ताम्). ]

—After 14, Ñ2 V1 B1.3.4 D5.7 M2 ins. :

1032* कश्चित्तथाप्रमत्ताभिर्भवितव्यं सदैव हि ।
तथैव प्रतिपत्तव्यमप्रमत्ताभिरेव हि ।

[ V1 B1.3 M2 om. (hapl.) l. 1. —B4 reads l. 1 in marg. —(l. 1) B4 मम (for सदा). —(l. 2) B1 प्रयतितव्यं (unmetrical) (for प्रति°). M2 तथा भवत्यो रक्षंतु यदि मां प्रीतमिच्छथ. ]

15 $^a$) Ś1 Ñ2 V2 B1.3.4 D1.2.5.7 transp. मुक्ता and मणि. Ś1 Ñ2 D1.2.5.7 -प्रवालानि; D3 -विचित्राणि (for -सुवर्णानि). —$^b$) Ś1 Ñ2 V B1.3.4 D1-3.5.7 [अ]जिन (D1 [अ]पि च) चंदनं. —$^c$) Ś1 तत्तदस्यै; Dt1 D6 T1.2 M1 तदैवास्या; D1.3 °स्यै (for तदेवास्या). D2 यद्यदैच्छत्तदेवास्यै. —$^d$) L(ed.) स्वच्छंदतो (for मच्छ°). Ś1 D1.2 [ऽ]पि च (Ś1 वा); Dg1 तथा (for यथा). D3 देयं स्वच्छंदतो हि मे. ❀ Ck : यद्यदिच्छेत्तदा चास्या देयं मच्छन्दतो यथेति पाङ्कः. ❀ —For 15$^{cd}$, Ñ2 V B1.3.4 D5.7 subst. :

1033* यद्यदिच्छति वैदेही तद्देयं विदितं मम ।

[ B3.4 विहितं (for विदितं). B1 मया (for मम). ]

या च वक्ष्यति वैदेही वचनं किंचिदप्रियम् ।
अज्ञानाद्यदि वा ज्ञानान्न तस्या जीवितं प्रियम् ॥ १६
तथोक्त्वा राक्षसीस्तास्तु राक्षसेन्द्रः प्रतापवान् ।
निष्क्रम्यान्तःपुरात्तस्मात्किं कृत्यमिति चिन्तयन् ।
ददर्शाष्टौ महावीर्यान्राक्षसान्पिशिताशनान् ॥ १७
स तान्दृष्ट्वा महावीर्यो वरदानेन मोहितः ।
उवाचैतानिदं वाक्यं प्रशस्य बलवीर्यतः ॥ १८
नानाप्रहरणाः क्षिप्रमितो गच्छत सत्वराः ।
जनस्थानं हतस्थानं भूतपूर्वं खरालयम् ॥ १९

तत्रोष्यतां जनस्थाने शून्ये निहतराक्षसे ।
पौरुषं बलमाश्रित्य त्रासमुत्सृज्य दूरतः ॥ २०
बलं हि सुमहद्यन्मे जनस्थाने निवेशितम् ।
सदूषणखरं युद्धे हतं तद्रामसायकैः ॥ २१
ततः क्रोधो ममापूर्वो धैर्यस्योपरि वर्धते ।
वैरं च सुमहज्जातं रामं प्रति सुदारुणम् ॥ २२
निर्यातयितुमिच्छामि तच्च वैरमहं रिपोः ।
न हि लप्स्याम्यहं निद्रामहत्वा संयुगे रिपुम् ॥ २३

G. 3. 60. 34
B. 3. 54. 24
L. 3. 60. 23

16 [a]) Ś1 यच् (for या). D1.2 याश्च वक्ष्यंति. B4 D5.8 T2 वैदेही. —G3 om. (hapl.) 16[cd]. —[c]) After वा, B4 ins. श्रीमद्गुरुचरणात् श्रीमन्मातृचरणे मम भक्तिरस्तु श्रीरामचन्द्रः. —[d]) D8 तत् (for न). D1.2 तासां (for तस्या). G2 भवेत् (for प्रियम्). Ś1 तत्सोढव्यं निरंतरं.

17 [a]) Dt1 तथोक्ता; M2 (after corr. *inf. lin. sec. m.* as in text) ततो वा (for तथोक्त्वा). Ś1 D1.2 राक्षसीश्च (D1 °स्तु) तथोक्त्वा स; Ñ2 V B1.3.4 D5.7 तथा स (V1 स तथा [by transp.]) राक्षसीरुक्त्वा; D3 तथोक्त्वा तु राक्षसो (subm.). —[c]) Ś1 D1.2 निर्गम्य (Ś1 °त्य); D4 M3 निष्काम्य (for निष्क्रम्य). Ñ2 B1.3.4 D5.7 तस्थौ (for तस्मात्). —[d]) D1 कार्यमन्य (sic) (for कृत्यमिति). D3 निश्चयं (for चिन्तयन्). —After 17[cd], Ñ2 V1 B1.3.4 D1-3.5.7 M3 ins.:

1034* स चिन्तयित्वा सुचिरं रावणो राक्षसेश्वरः ।

[ V1 M3 राक्षसाधिपः. ]

—Ś1 om. 17[ef]. —V2 illeg. from 17[e] up to 18[b]. —For 17[ef], Ñ2 V1 B1.3.4 D5.7 subst.:

1035* आजुहाव महावीर्यानष्टौ राक्षसपुंगवान् ।

[ Ñ2 आजहार. ]

—After 17, D8 ins. राम.

18 V2 illeg. for 18[ab] (cf. v.l. 17). —[a]) Ñ2 V1 B1.3.4 D5.7 धीमान् (for दृष्ट्वा). V1 B1.4 D1.3 महावीर्यान् (for °वीर्यो). —[b]) B1 दर्पितः; G2 गर्वितः (for मोहितः). D5 वरदाने समाहितः. —[c]) Dt1 D6 T1 G3 तान्; D4 T3 G1.2 M2.3 [ए]नान् (for [ए]तान्). Ñ2 V B1.3.4 D5.7 उवाच वचनं स्निग्धं; D3 उवाचैतानि तद्वाक्यं (sic). —[d]) V2 illeg.; D8 -वीर्यवान् (for -वीर्यतः).

19 V2 illeg. from 19 up to निहत in 20[b]. —[a]) Dg1 T3 शीघ्रम् (for क्षिप्रम्). Ś1 D1.2 नानाप्रहरणोपेताः. —[b]) Ś1 D2 क्षिप्रं (for इतो). D1.2 गच्छंतु; D3 °थ (for गच्छत). Ñ2 V1 B1.3.4 D5.7 राक्षसाः. —[c]) Ñ2 reads in marg.; Dm1 हृतस्थानं; D5 भूतपूर्वं (for हतस्थानं). —[d]) Ś1 D2.4 भूतं पूर्वं; V1 B3.4 °पूर्व-; D1 शून्यभूतं (for भूतपूर्वं). D5 खरालयं तु सत्तमाः.

20 V2 illeg. up to निहत in 20[b] (cf. v.l. 19). —[a]) B1.3 Dt1 D6 [आ]स्यतां (for [उ]ष्यतां). —[c]) B3.4 D3 आस्थाय (for आश्रित्य).

21 Dg1 D4 T2.3 om. 21-23. —[a]) Ñ2 D5.7 च (for हि). V2 illeg. from महद् up to in 22[b]. Ś1 बलं च मे बहुरूपं; Dt1 Dm1 D6.8 M1 बहुसैन्यं महा (M1 °हद्) वीर्यं; D1.3 बलं मे बहुभृत्यं च; D2 बलं च मे बह्वूपं; G2 बलं हि सुमहावीर्यं. —[b]) D3 M1 जनस्थान-; D5 जन्म° (for जनस्थाने). —M3 om. 21[c]-23. —[c]) Ñ2 V1 B1.3.4 D5.7 संख्ये (for युद्धे). —[d]) Dt1 Dm1 D6.8 G2.3 M1 निहतं; D3 हतं वै (for हतं तद्). D1 रामस्य; T1 G1 रामेण (for तद्राम-).

22 Dg1 D4 T2.3 M3 om. 22; V2 illeg. for 22[ab] (for all, cf. v.l. 21). B3 om. 22[ab]. —[a]) Cr.g तत्र (for ततः). T1 Cg [अ]मर्षाद्; G1.3 [अ]मर्षो (for [अ]पूर्वो). —[b]) G1 रामस्य (for धैर्यस्य). T1 G M1 वर्तते (for वर्धते). M2 धैर्येणेव निगृह्यते. —For 22[ab], Ś1 D1-3 subst.:

1036* तस्य क्रोधान्महामर्षो वीर्यं च समवर्धत ।

[ D3 तत्र (for तस्य) and मम (for महा-). D1.2 रोषं (sic); D3 वैरं (for वीर्यं). D3 परिवर्धते (for समवर्धत). ];

while Ñ2 V1 B1.4 D5.7 subst.:

1037* तेनामर्षेण महता ममाविष्टस्य राक्षसाः ।

[ V1 B1 हतेन तेन. Ñ2 D7 मयाविष्टस्य; V1 मनादिष्टस्य (sic); B4 समा°; G (ed.) मया सृष्टेन (for ममाविष्टस्य). ]

—[c]) Ñ2 V B1.3.4 D5.7 संजातं सुमहद्वैरं.

23 Dg1 D4 T2.3 M3 om. 23 (cf. v.l. 21). —[a]) Ś1 निवारयितुम् (for निर्यात°). —[b]) Ś1 D1.2 तस्य; Dm1 D8 तं च (for तच्च). Ś1 Dt1 Dm1 D6.8 G1 M1 महा- (for अहं). V2 illeg. from महं up to 24[a]. Ñ2 V

G. 3. 60. 35
B. 3. 54. 25
L. 3. 60. 24

तं त्विदानीमहं हत्वा खरदूषणघातिनम् ।
रामं शर्मोपलप्स्यामि धनं लब्ध्वेव निर्धनः ॥ २४
जनस्थाने वसद्भिस्तु भवद्भी राममाश्रिता ।
प्रवृत्तिरुपनेतव्या किं करोतीति तत्त्वतः ॥ २५
अप्रमादाच्च गन्तव्यं सर्वैरेव निशाचरैः ।
कर्तव्यश्च सदा यत्नो राघवस्य वधं प्रति ॥ २६
युष्माकं हि बलज्ञोऽहं बहुशो रणमूर्धनि ।
अतश्चास्मिञ्जनस्थाने मया यूयं नियोजिताः ॥ २७

ततः प्रियं वाक्यमुपेत्य राक्षसा
महार्थमष्टावभिवाद्य रावणम् ।
विहाय लङ्कां सहिताः प्रतस्थिरे
यतो जनस्थानमलक्ष्यदर्शनाः ॥ २८
ततस्तु सीतामुपलभ्य रावणः
सुसंप्रहृष्टः परिगृह्य मैथिलीम् ।
प्रसज्य रामेण च वैरमुत्तमं
बभूव मोहान्मुदितः स राक्षसः ॥ २९

इति श्रीरामायणे अरण्यकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

B1.3.4 D5.7 वैरं तस्य दुरा( V1 B1 महा )त्मनः( V2 **** [ illeg. ] ). —$^{c}$ ) B1.3.4 D3 लप्स्यामहे; Dt1 Dm1 D8 ( before corr. ) G2 M1 पश्या° ( for लप्स्याम्यहं ). V1 नाहं लप्स्यामहे निद्राम् ( sic ); M2 न हि निद्राम्यहं रामम्. —$^{d}$ ) Ñ2 V1 B1.4 D5.7 राघवं रणे; B3 राक्षसं रणे; M1 संगरे रिपुं ( for संयुगे रिपुम् ). —After 23, Ñ2 V1 B1.3.4 D5.7 ins. :

1038* तस्माद्भवद्भिस्तत्कार्यं यथा वध्येत मे रिपुः ।

[ Ñ2 D5.7 तथा ( for तस्माद् ). Ñ2 V1 बा( V1 ब )ध्येत ( for वध्येत ). ]

24 V2 illeg. for 24$^{a}$ ( cf. v.l. 23 ). —$^{a}$ ) D3 G1 तत्. D1.3 इदानीम् ( for त्वि° ). Ñ2 V1 B1.3.4 D5.7 तमहं निहतं श्रुत्वा( B3 दृष्ट्वा ). —$^{c}$ ) Ñ2 V B1.3.4 D5.7 [ अ ]धि ( V B1 [ अ ]मि )गच्छेयं; Dt1 [ उ ]पलक्ष्यामि ( for [ उ ]-पलप्स्यामि ). —$^{d}$ ) D3 लाभं ( for धनं ). D6 [ ए ]व ( for [ इ ]व ). —After 24, Ś1 D1-3 ins. :

1039* मया हतस्य समरे चीरवल्कलवाससः ।
वज्राङ्गा भक्षयिष्यन्ति तस्याङ्गानि दुरात्मनः ।

[ ( l. 2 ) D1 जंबुका; D3 चक्रांगा ( for वज्राङ्गा ). ]

25 $^{ab}$ ) V2 illeg. from स्तु up to सर्वैरे in 26$^{b}$. B3.4 च ( for तु ). Ñ2 V1 B1.3.4 D5.7 G1 भवद्भिस्तु वसद्भी ( by transp. ). Ñ2 V1 B1.3.4 D5.7 रामसंश्रया( V1 B1 °यात् ); D1 राममाश्रितां; T3 काममाश्रितं ( for राममाश्रिता ). —$^{c}$ ) Ś1 D2 अधिगंतव्या ( for उपने° ). D1 प्रवृत्तिमुपलब्धास्मि. —$^{d}$ ) B4 D4.7 करोमि( D7 °* ) ( for करोति ). D1.2 राघवः ( for तत्त्वतः ).

26 V2 illeg. up to सर्वैरे in $^{b}$ ( cf. v.l. 25 ). —$^{a}$ ) Ś1 B1.2 अप्रमादाच्च( Ś1 °दैश्च ) कर्तव्यं( B1 °व्यः ); Ñ2 V1 B3 D1-3.6.7 T2 अप्रमादश्च( D3 °स्तु ) कर्तव्यः. —$^{b}$ ) K( ed. ) अपि ( for एव ). —$^{c}$ ) D3 तु ( for च ). Ś1 D1-3 भवेद्यत्नो; M3 तदा यत्नो ( for सदा यत्नो ). —$^{d}$ ) D3 रणं ( for वधं ).

27 $^{a}$ ) V1 B1 अस्माक ( for युष्माकं ). Ñ2 Dm1 D3.8 T1 G3 Cg च; B1 Dg1 Dt1 D6 T2.3 M2 तु ( for हि ). Ñ2 V B1.3.4 Dt1 D5-7 T1 बलं ज्ञात्वा( V Dt1 D6 T1 °तं ) ( for बलज्ञोऽहं ). —$^{b}$ ) V2 illeg. from रण up to 28$^{b}$. Ñ2 V1 B1.3.4 D5.7 रणकर्मणि. —$^{c}$ ) Ś1 अतोपि वै; D1 °श्चास्य; D2 अतो यूयं; D3 एतदर्थं; M2( after corr. *sup. lin. sec. m.* as in text )°श्चास्ति ( for अतश्चास्मिञ् ). T1 नूनं ( for यूयं ). —$^{d}$ ) Dg1 Dt1 Dm1 D4.6.8 T3 G M( M2 after corr. *sup. lin. sec. m.* as in text ) नि( Dg1 T3 प्र )वेशिताः ( for नियोजिताः ). Ś1 D1-3 मया वै विनियोजिताः( Ś1 °तः; D3 °वेशिताः ). —For 27$^{cd}$, Ñ2 V1 B1.3.4 D5.7 subst. :

1040* अतश्च विनियोगेऽस्मिन्भवन्तो विनियोजिताः ।

[ Ñ2 D5.7 अत्रं; V1 सुतश् ( sic ) ( for अतश् ). V1 विनि-योगकाः. ]

—Then all the above MSS. cont. :

1041* संप्रधार्य मद्वीर्यं भवतां सुदुरासदम् ।

[ V1 महावीर्यं ( for मद्वीर्यं ). ]

28 V2 illeg. for 28$^{ab}$ ( cf. v.l. 27 ). —$^{a}$ ) M1 अतः. Ś1 Ñ2 V1 B1.3.4 D1-3.5.7 अवेक्ष्य( Ś1 D2 °त्य ); G2 उपेत्य ( for उपेत्य ). —$^{b}$ ) Ñ1 B1.3.4 D5.7 यथार्थम्; T2 मुहूर्तम् ( for महार्थम् ). Dm1 D1.8 अभिवंद्य; G3( *sup. lin.* also ) उपलभ्य ( for अभिवाद्य ). Ś1 D2 महार्थवंतं प्रतिपद्य रावणात्( D2 °णिपत्य रावणं ); V1 यथानुमानावभिवाद्य रावणं; G2 महार्थमष्टौ नृपतिं प्रणम्य तं.

☞ Ñ1 resumes from विहाय in 28$^{c}$ ( cf. v.l. 1 ). —$^{c}$ ) Ś1 D2 सहसा ( for सहिताः ). —$^{d}$ ) B3 D1.3 अवेक्ष्य ( for अलक्ष्य- ). D1.3 सत्वराः ( for -दर्शनाः ).

29 $^{a}$ ) Ñ2 D5.7 च; V1 om.; V2 B1.3.4 ( marg. ) स ( for तु ). D1 transp. ततस्तु and सीताम्. Ś1 D1.2 प्रति-लभ्य; Ñ2 D5.7 अभिरक्ष्य ( for उपलभ्य ). Dm1 D8 G3 मैथिलीं ( for रावणः ). —$^{b}$ ) G2 M3 स संप्रहृष्टः ( for

# ५३

संदिश्य राक्षसान्घोरान्रावणोऽष्टौ महाबलान् ।
आत्मानं बुद्धिवैक्लव्यात्कृतकृत्यममन्यत ॥ १
स चिन्तयानो वैदेहीं कामबाणसमर्पितः ।
प्रविवेश गृहं रम्यं सीतां द्रष्टुमभित्वरन् ॥ २
स प्रविश्य तु तद्वेश्म रावणो राक्षसाधिपः ।
अपश्यद्राक्षसीमध्ये सीतां शोकपरायणाम् ॥ ३
अश्रुपूर्णमुखीं दीनां शोकभारावपीडिताम् ।
वायुवेगैरिवाक्रान्तां मज्जन्तीं नावमर्णवे ॥ ४
मृगयूथपरिभ्रष्टां मृगीं श्वभिरिवावृताम् ।
अधोमुखमुखीं दीनामभ्येत्य च निशाचरः ॥ ५

G. 3. 61. 0
B. 3. 55. 5
L. 3. 61. 6

सुसं°). Ś1 प्रतिलभ्य; Dm1 D3.8 T1 G1 प्रति°; T2 स तु गृह्य; G3 सुनि°; M3 स नि° (for परिगृह्य). Dm1 D8 G3 रावण: (for मैथिलीम्). Ñ1 पुरा प्रहृष्टश्च निगृह्य मैथिलीं; Ñ2 V B1.4 D5.7 विसृज्य चाष्टौ रजनीचरांस्तदा. —c) Ś1 Ñ B1.3.4 D1–3 प्रसह्य (for सुसज्य). —d) G3 तु; M3 च (for स). Dt1 D4.6 T2 G2 M3 रावण: (for राक्षसः). Ś1 Ñ2 V B1.3.4 D1–3.5.7 मु(V म)दान्वि(B4 °यु)तो राक्षसराड्बभूव ह.

❀ Cv : असंप्रहृष्टः प्रतिगृह्य मैथिलीमिति पाठः। मुदितः स राक्षस इति च पाठः. ❀

Colophon. —*Sarga name* : Ś1 D2 सीताप्रमाथः; Ñ1 D1.3 लंकाप्रवेशः; Ñ2 V B1.3.4 D5.7 सीता(B3.4 °ताया)-लंकाप्रवेशः. —*Sarga no.* (figures, words or both): Ś1 Ñ1 B1.3 D2 om.; Ñ2 D5.7 60; V1 59; V2 63; B4 D3 61; Dg1 Dt1 Dm1 D6.8 T G M1.2 54; D1.4 57; M3 55. —After colophon, G1.2 concludes with श्रीरामाय नमः.

## 53

Before Sarga 53, V1 ins. App. I (No. 12). V2 illeg. from Sarga 53 up to 3.57.19. D8 begins with ॐ; M1 with श्रीरामाय नमः.

**1** a) Ñ1 आदिश्य (for संदि°). Ñ2 V1 B1.3.4 D5.7 राक्षसांस्तु समादिश्य. —b) M1 राक्षसो (for रावणो). Dg1 महामनाः; D4 G3 °बलः (for °बलान्). —c) Ś1 Ñ1 D1–3 आत्मनो(D3 °ना). Ś1 Ñ V1 B1.3.4 D1.2.5.7 G3 -दौर्बल्यात् (for -वैक्लव्यात्). —d) Ś1 D1–3 कृतं(D2 °त) कार्यम् (for कृतकृत्यम्).

**2** a) Dt1 T2 G1 M2 सं- (for स). —b) Dt1 D4.6 G1 M2 कामबाणैः. Ś1 Ñ1 D1.2 -बलार्दितः; Ñ2(marg.) B1.3.4 Dg1 D5.7 -सम(D5 °मा)र्दितः; V1 -मदर्पितः; Dt1 Dm1 D6.8 G3 -[अ]व(Dt1 D6 प्र)पीडितः; T2.3 -समन्वितः (for -समर्पितः). —c) Ś1 D1–3 प्रावेशयद्; Ñ2 in marg. (for प्रविवेश). —Ś1 D1–3 om. (hapl.) 2d–3c. —d) Ñ1 स सत्वरः; Ñ2 V1 B1.4 D5.7 अति(D5 °पि)त्वरन्; G3 इह त्वरन्.

**3** Ś1 D1–3 om. 3abc (cf. v.l. 2). Ñ1 M2 om. 3ab. —a) Ñ2 B4 D5.7 च (for तु). T2 M1 संप्रविश्य तु; G2 स तु प्रविश्य (by transp.). —b) Dm1 D4.8 G राक्षसेश्वरः. —c) Ñ1 सोपश्यद्. —d) V1 Dt1 D6 दुःख- (for शोक-). —After 3, Ñ2 B1.3.4 D5.7 read 6ab.

**4** V1 om. 4–5. Ñ2 B1.3.4 D5.7 G(ed.) om. 4ab. —a) M3 आपूर्णाश्रु- (for अश्रुपूर्ण-). D6 -मुखां (for -मुखीं). —b) Ñ1 -निपीडितां; D1 T1 Cg -[अ]भिपी°; M3 -[अ]-तिपी° (for -[अ]वपी°). Ś1 D2 मलिनामपि शोभितां. —B1 reads 4c–5 (including 1046*) in marg. —c) B1.3.4 वारिपूरैर्(B1 °र्णैर्); Dt1 वायुदेवैर् (for वायुवेगैर्). B1 [आ]क्रांता. —d) B1.3.4 मज्जंतीं(B1 °ती) नौवद(B1 °रिवा)-र्णवे; D1 लतामिव वनस्पतेः. —For 4cd, Ñ1 subst.:

1042* उत्पातमारुताविद्धां सन्नां नावमिवार्णवे ।;

while Ñ2 D5.7 subst.:

1043* वारिधाराभिराक्रान्तां मज्जन्तीं शोकसागरे ।

—After 4, D8 ins. राम.

**5** V1 om. 5 (cf. v.l. 4). B1 reads 5 (including 1046*) in marg. (cf. v.l. 4). —a) D3 मृगयूथादिव भ्रष्टां. —G(ed.) om. 5cd. —c) Dm1(before corr. as in text) D6 Ct °गत- (for °मुख-). Ñ2 B3.4 Dt1 D5.7 -गतां (for -मुखीं). Dg1 Dt1 D4.6 T G3 (before corr. as in text) M2.3 सीताम् (for दीनाम्). Ś1 D1–3 अधोमुखीं तु तां दीनाम्(D3 दीनतराम्). —After 5c, Ś1 D2 ins.:

1044* मलिनामपि शोभिताम् ।
चन्द्रलेखामिवाम्भोदैराच्छन्नामम्बरे निशि ।
सद्यो वनादुपानीतां त्रस्तां वत्सतरीमिव ।
सर्वा दिशश्च वीक्षन्तीम् .

[(l. 3) D2 वत्सवतीमिव.]

—d) Ś1 Ñ2 B1.3.4 D1–4.7 G3 M2.3 स (for च). Dt1 Dm1 D6.8 तामभ्येत्य; D5 उपेत्य स (for अभ्येत्य च). —For 5cd, Ñ1 subst.:

1045* अधोमुखीं निरानन्दां राघवे गतचेतसाम् ।

—After 5, Ñ2 B1(m.).3.4 D5.7 ins.:

1046* भर्तृशोकवशां दीनां रावणो राक्षसाधिपः ।

[B1.3 -परां दीनां; B4 -परिक्षीणां (for -वशां दीनां).]

G. 3. 61. 4
B. 3. 55. 6
L. 3. 61. 6

तां तु शोकवशां दीनामवशां राक्षसाधिपः ।
स बलाद्दर्शयामास गृहं देवगृहोपमम् ॥ ६
हर्म्यप्रासादसंबाधं स्त्रीसहस्रनिषेवितम् ।
नानापक्षिगणैर्जुष्टं नानारत्नसमन्वितम् ॥ ७
काञ्चनैस्तापनीयैश्च स्फाटिकै राजतैस्तथा ।
वज्रवैदूर्यचित्रैश्च स्तम्भैर्दृष्टिमनोहरैः ॥ ८
दिव्यदुन्दुभिनिर्ह्रादं तप्तकाञ्चनतोरणम् ।
सोपानं काञ्चनं चित्रमारुरोह तया सह ॥ ९
दान्तका राजताश्चैव गवाक्षाः प्रियदर्शनाः ।
हेमजालावृताश्चासंस्तत्र प्रासादपङ्क्तयः ॥ १०

**6** Ñ2 B1.3.4 D5.7 read $6^{ab}$ after 3. —$^{a}$) V1 च (for तु). Ñ1 B3.4 Dg1 T M1 -परां दीनाम्; Dt1 G1.2 M2 -वशाद्दीनाम्; D3 -समाविष्टां; D5 -कृशां दीनां (for -वशां दीनाम्). B1 (m. also) भर्तृशोकपरां दीनां. —$^{b}$) Ñ2 V1 B1.4 D3.5.7 स बली; B3 अबलां; T1 विवशां (for अवशां). M2 राक्षसेश्वरः. —For $6^{ab}$, Ś1 D1.2 subst.:

1047* भृशं शोकसमाविष्टां बलवान्राक्षसेश्वरः ।

[ Ś1 (before corr.) शोकपरिभ्रष्टां. D1 राक्षसाधिपः. ]

—$^{c}$) Ś1 Ñ V1 B1.3.4 D1-3.5.7 विवशां; T2 निवेशं; G1 स्वबलं; Cvp also as in text (for स बलाद्). —$^{d}$) D3 राज- (for देव-).

**7** $^{a}$) T2 -प्राकार- (for -प्रासाद-). Ñ1 हर्म्य * * * * * * (illeg.). —$^{b}$) D4 स्त्रीसहस्रैर्. —$^{c}$) Dg1 -मृगैर् (for -गणैर्). —$^{d}$) Ś1 D1.2 G3 -समाकुलं; Ñ1 D3 -समायु(D3 °वृ)तं; M2 -विभूषितं (for -समन्वितम्). Ñ2 V1 B1.3.4 D5.7 नानामृगसमा(Ñ2 D5.7 °गणा)कुलं.

**8** Ś1 om. 8. —$^{ab}$) Dg1 Dt1 D6 T3 Cm.t दांतकैस्; T1 दांतैश्च (for काञ्चनैस्). B3 D4 M3 तपनीयैश्च; D2 चारुदंतैश्च; G3 तापनैश्चैव. Ñ1 कांचने रामभिश्चैव (corrupt) (for $^{a}$). Dt1 Dm1 D8 स्फटिकै. Dm1 रजतैस्. V1 T2 transp. स्फाटिकै and राजतैस्. T1.2 अपि (for तथा). G3 स्फाटिकैरपि राजतैः (राजतैः *int. lin.*) (for $^{b}$). L(ed.) कांचनै राजतैश्चारुदांतैश्च स्फाटिकैस्तथा. —$^{c}$) Ñ1 D S(except T2) -वैडूर्य-. Ñ V1 B1.3.4 D1-3.5.7 -गर्भैश् (for -चित्रैश्). —D2 reads $8^{d}$–$10^{a}$ in marg. *sec. m.* —$^{d}$) D3 दीप्तं; D7 दृष्टैर्; G3 जुष्टं (for दृष्टि-). B3 Dg1 Dt1 Dm1 D3.6.8 G3 M3 -मनोरमैः(G3 °मं); G2 °हरं (for -मनोहरैः). —After 8, G(ed.) ins. 1048*.

**9** D2 reads 9 in marg. (cf. v.l. 8). G(ed.) om. $9^{ab}$. —$^{a}$) Ñ2 V1 B1.3.4 D5.7 देव- (for दिव्य-). Ñ1 -निर्ह्रादैस्; Dt1 Dm1 D6.8 -निर्घोषं (for -निर्ह्रादं). —$^{b}$) Ñ1 -तोरणैः; Dt1 Dm1 D3.6.8 -भूषणं; D2 -पूरणं (for -तोरणम्). —After $9^{ab}$, Ñ2 V1 B1.3.4 D5.7 ins.; whereas G(ed.) ins. after 8 (owing to omission):

1048* आक्रीडालंकृतं स्फीतं सुविभक्तं सुसंस्कृतम् ।
चन्द्रार्कपथमावृत्य स्थितं श्वेतघनोपमम् ।
पर्वतस्येव शिखरं सुमेरो रजतप्रभम् ।
काञ्चनी वडभी यस्य सूर्यमार्गपथे स्थिता ।
अर्करश्मिप्रतिहता ज्वलदग्निचयोपमा । [5]
प्रासादः पाण्डुरो यस्य तप्तकाञ्चनवेदिकः ।
काञ्चनाङ्गदसंवीतः पूर्णेन्दुरिव दृश्यते ।
क्वचित्काञ्चनसंबाधं क्वचिद्रजतवेदिकम् ।
क्वचिन्मणिविचित्रं च मुक्ताफलविभूषितम् ।

[ (l. 1) V1 आक्रीडनं क्रीडितं (hypm.) (for °डालंकृतं). B1.3 प्रविभक्तं(B1 °क्त) (for सुवि°). —(l. 2) Ñ2 B3 D5.7 आश्रित्य (for आवृत्य). —(l. 3) B1 इव सुप्रभं; G(ed.) ज्वलितप्रभं (for रजत°). —(l. 4) V1 D7 वलभी (for वडभी). Ñ2 D5.7 -परिस्थिता (for -पथे स्थिता). —(l. 5) V1 चलदग्नि- (for ज्वल°). B4 ज्वलत्यग्निशिखोपमा (for the post. half). —(l. 6) V1 प्रासादाः. Ñ2 V1 B1.3.4 D7 पांडरो(V1 °रा) (for पाण्डुरो). D7 तथा (for तप्त-). V1 -वेदिकाः. —(l. 7) G(ed.) कांतिंदुर् (for पूर्णेन्दुर्). —(l. 8) V1 कांचन- (for रजत-). —(l. 9) V1 B1 मुक्तामणि- (for मुक्ताफल-). Ñ2 D5.7 -विचित्रितं (for -विभूषितम्). ]

—Ñ1 om. $9^{cd}$. —$^{c}$) D4 कनकं; M2 (before corr. *pr. m.* as in text; after corr. *sec. m.*) कांचनैश् (for काञ्चनं). Ś1 D1.2 चित्रकांचनसोपानम्. —$^{d}$) G(ed.) आरुह्याथ (for °रोह). —After 9, Ñ2 V1 B1.3.4 D5.7 ins.:

1049* दर्शयामास तत्तस्या रामपत्न्या गृहोत्तमम् ।

[ Ñ2 तस्य (for तस्या). V1 B4 ददृशे वशगा(B4 °या) तस्य; B1.3 ददृशे चान(B3 च त)या तस्य (for the prior half). V1 रामपत्नी (for °पत्न्या). Ñ2 V1 B1 गृहोपमं. ]

**10** D2 reads $10^{a}$ in marg. (cf. v.l. 8). —$^{ab}$) Ś1 D1-3 दांताश्च; Dm1 D8 T1.2 M3 Cm.g दां(D8 दं)तिका (for दान्तका). M1 दांतकै राजतैश्चैव (for $^{a}$). M1 गवाक्षैः (for °क्षाः). Ñ1 दांतैश्च राजभिश्चैव आसनैः प्रियदर्शनैः (with hiatus). —$^{cd}$) D3 हिम- (for हेम-). T2 G2 -माला- (for -जाल-). Ñ1 illeg. from वृ up to स्तत्र. Dt1 [आ]दताश् and अत्र (for -[आ]वृ° and तत्र respy.). Ñ1 -शोभनं (for -पङ्क्तयः). —For 10, Ñ2 V1 B1.3.4 D5.7 subst.:

1050* दान्तिकै राजतैः श्वेतैर्गवाक्षैः प्रियदर्शनैः ।
हेमजालावृतैश्चैव हर्म्यैः साग्रवितानकैः ।

[ (l. 1) V1 B4 चित्रैर्; B1.3 चैव (for श्वेतैर्). —(l. 2) B1.3.4 -वृतैश् (for -[आ]वृतैश्). V1 वक्षैः; B1.3.4 रम्यैः (for हर्म्यैः). B3 साध- (sic) (for साग्र-). ]

—All cont.:

1051* पुष्पकं च विमानं च देववृन्दनिषेवितम् ।
अदर्शयद्दशग्रीवः कामगं कामरूपिणम् ।

सुधामणिविचित्राणि भूमिभागानि सर्वशः ।
दशग्रीवः स्वभवने प्रादर्शयत मैथिलीम् ॥ ११
दीर्घिकाः पुष्करिण्यश्च नानापुष्पसमावृताः ।
रावणो दर्शयामास सीतां शोकपरायणाम् ॥ १२
दर्शयित्वा तु वैदेहीं कृत्स्नं तद्भवनोत्तमम् ।
उवाच वाक्यं पापात्मा रावणो जनकात्मजाम् ॥ १३
दश राक्षसकोट्यश्च द्वाविंशतिरथापराः ।
वर्जयित्वा जरावृद्धान्बालांश्च रजनीचरान् ॥ १४
तेषां प्रभुरहं सीते सर्वेषां भीमकर्मणाम् ।
सहस्रमेकमेकस्य मम कार्यपुरःसरम् ॥ १५

G. 3. 61. 0
B. 3. 55. 15
L. 3. 61. 15

[ (l. 1) V1 B1.4 तु (for second च). B1 -सद्म- (for -वृन्द-). Ñ2 D5.7 देवगंधर्वसेवितं; B4 G(ed.) देव( G[ed.] दैवं )सद्मनिवेशितं (for the post. half). —(l. 2) B4 कामगः. ]

11 [a]) B3 मुक्तामणि-; D4 G1 M3 सुधामय-. Ñ2 B1.3.4 D4.5.7 -विचित्रांश्च; V1 G1 M1 -विचित्राश्च (for -विचित्राणि). Ñ1 सुवर्णमणिचित्राणि. —[b]) Ś1 Ñ1 D2 -बंधानि; D1.3 -बद्धानि; D4 -भागांश्च; G1 M1 -भागाश्च; G3 -भागा हि (for -भागानि). Ñ1 illeg.; G3 damaged (for सर्वशः). Ñ2 V1 B1.3.4 D5.7 भूमिभागां( V1 °गा )स्ततस्ततः; M2 भूमिभागाः समंततः. —D1 om. 11[c]-12[b]. Ñ1 transp. 11[cd] and 12[ab]. —[c]) Ś1 D2 स्ववेश्मानि; V1 स्वभवनं; Dt1 स्वभावेन; G2.3 तु( G3 स ) भवने (for स्वभवने). —[d]) Ś1 D2 तस्या दर्शयते तदा; Ñ V1 B1.3.4 D5.7 T2 दर्शयामास राक्षसः ( Ñ1 सर्वतः; T2 मैथिलीं ). —For 11[cd], D3 subst.:

1052* दशग्रीवस्स्वभावेन तान्यदर्शयदेव सः ।

—After 11, Ñ2 V1 B1.3.4 D5.7 ins.:

1053* चित्रशालाश्च विविधाः कृत्रिमांश्चैव पर्वतान् ।
रम्यान्क्रीडागृहांश्चैव सोऽदर्शयदितस्ततः ।
तप्तकाञ्चनसोपाना वापीः कमलपिङ्गलाः ।

[ (l. 1) B3 चित्रमालाश्. Ñ2 B4 D5 च बहुधा; D7 बहुविधा (for च विविधाः). V1 च (subm.) (for चैव). Ñ2 V1 D5.7 पादपान् (for पर्वतान्). —(l. 2) B3 क्रीडामृगांश्. —(l. 3) B1.4 कनक- (for कमल-). ]

12 D1 om. 12[ab] (cf. v.l. 11). Ñ1 transp. 11[cd] and 12[ab]. —[a]) Ś1 D2 पुष्कैः कीर्णा; G(ed.) °रिणीश्च (for पुष्करिण्यश्च). ❀ Cv : पुष्करिण्यः पुष्करिणीः विभक्तिव्यत्ययेन द्वितीयार्थे प्रथमा. ❀ —[b]) Ñ1 B4 D2-4 T1 G M2 -वृक्ष-; M3 -रत्न- (for -पुष्प-). Ñ2 Dg1 D5.7 T2.3 नानावृक्ष ( T2 °पक्षि )समन्विताः; V1 B1.3 M1 नानावृक्ष( M1 °पक्षि )-समाकुलाः( B3 °श्रिताः ). —Ñ1 om. 12[cd]. —[d]) Ñ2 B1.3.4 D5.7 नानापत( B1 °न्न )गसंयुताः; D1 सीतायाः स्वां पुरीं तदा. —For 12[cd], V1 subst.; while Ñ2 B1.3.4 D5.7 ins. after 12:

1054* नन्दनप्रतिमान्येव तथैवोद्यानकान्यपि ।
प्रहृष्टः सोऽप्यहृष्टां तां विवशां राक्षसो बलात् ।
रावणः पश्य पश्येति दीनाख्यामब्रवीत्तदा ।

[ (l. 1) V1 -प्रतिमांश्चैव (sic). B1.3 तस्यैव (for तथैव). Ñ2 V1 D5.7 तस्या( V1[with hiatus] °स्य ) उद्यानकान्यपि (for the post. half). —(l. 2) Ñ2 सोप्य ** (illeg.); B1.3.4 को( B1 सो )पहृ( B1 °वि; B4 °जु )ष्टां (for सोऽप्यहृष्टां). V1 प्रविष्टः सोप्रविष्टां तां (for the prior half). V1 B1.3.4 बली (for बलात्). —(l. 3) B1.3 दीनां ताम्. B1 पुनः (for तदा). ]

13 [a]) Ñ1 स; T2 M1 च (for तु). Dg1 T3 स दर्शयित्वा. Ś1 Ñ1 D1-3 T1 वैदेह्याः; Ñ2 V1 B3.4 D5.7 [ अ ]-कामाया; B1 क्षामाया (for वैदेहीं). —[b]) D3 कृच्छ्रं च (for कृत्स्नं तद्). D8 भवनोपमं (for °त्तमम्). Ñ2 V1 B1.3.4 D5.7 वैदेह्यास्तद्गृहोत्तमं. —[c]) Ñ2 D5.7 वाचं (for वाक्यं). Ñ1 वाक्यज्ञो (for पापात्मा). —[d]) Ñ1 illeg. for रावणो. Dg1 Dt1 D6 T सीतां लोभितुमिच्छया( D6 reads तुमिच्छया in marg. ). ❀ Cr.g.k : लोभितुं लोभयितुं ।; Cm.t : लोभितुं सामनिग्रहाभ्यां प्रलोभयितुं. ❀

14 D6 reads in marg. from 14[a] up to भी in 15[b]. —[ab]) Ś1 D2.3 मे; Dg1 D1 T3 G3 तु (for च). T2 तथा (for अथ). Ś1 D1-3 द्वात्रिंशच्च महौजसां (for [b]). Ñ1 रक्षसां दशको** **नामुत्तमोजसां( illeg. ). —After 14[ab], Ś1 D1-3 read 15 (along with l. 5 and 11 of 1056*); Ñ1 reads 1055*; while G3 reads 15[a]. Dg1 D4 T1.3 G1.2 M Cg transp. 14[cd] and 15[ab]. —[c]) Ñ1 D3 जडान्; Dg1 [ आ ]तुरान्; Dt1 Dm1 D6.8 G3 जनान् (for जरा-). —[d]) Dg1 reads रजनीच in marg. —After 14, D4 M3 ins. l. 5 of 1056*.

15 D6 reads in marg. up to भी in 15[b] (cf. v.l. 14). T2 om. 15[ab]. Ś1 D1-3 read 15 (along with l. 5 and 11 of 1056*) after 14[ab]. Dg1 D4 T1.3 G1.2 M Cg transp. 14[cd] and 15[ab]. G3 reads 15[a] after 14[ab]. —[a]) Ś1 Dm1 D1-3.8 M3 येषां; D4 एषां (for तेषां). —G3 reads 15[b] after 17[c]. —[b]) Dg1 reads from षां up to कर्म in marg. Ś1 D1.2 शूराणां (for सर्वेषां). M3 क्रूर- (for भीम-). —After 15[ab], Ś1 D1-3 ins. l. 5 of 1056*. —[c]) D2 एवम्; M3 जनम् (for एकम्). —[d]) G1 M2.3 कार्ये (for कार्य-). D4 M1.2 -पुरःसराः; G3 -पु**रं (damaged) (for -पुरःसरम्). Ś1 D1-3 समीयुर्ये पुरःसराः. ❀ Cv : तेषां प्रभुरिति पाठः। सहस्रमेकमेकस्येति पाठः. ❀ —For 15, Ñ1 subst. and reads after 14[ab]:

1055* येषां प्रभुरहं सीते सर्वेषामनिवर्तिनाम् ।
तेषामपि च शूराणां समरेष्वाततायिनाम् ।
प्रभाव*स्यहं (illeg.) तेषां रक्षसां भीमकर्मणाम् ।
एतन्मे सुमहत्सैन्यमक्षयं रिपुनाशनम् ।

G. 3. 61. 28
B. 3. 55. 16
L. 3. 61. 17

यदिदं राज्यतन्त्रं मे त्वयि सर्वं प्रतिष्ठितम् ।
जीवितं च विशालाक्षि त्वं मे प्राणैर्गरीयसी ॥ १६
बहूनां स्त्रीसहस्राणां मम योऽसौ परिग्रहः ।
तासां त्वमीश्वरी सीते मम भार्या भव प्रिये ॥ १७
साधु किं तेऽन्यया बुद्ध्या रोचयस्व वचो मम ।
भजस्व माभितप्तस्य प्रसादं कर्तुमर्हसि ॥ १८
परिक्षिप्ता समुद्रेण लङ्केयं शतयोजना ।
नेयं धर्षयितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ १९
न देवेषु न यक्षेषु न गन्धर्वेषु नर्षिषु ।
अहं पश्यामि लोकेषु यो मे वीर्यसमो भवेत् ॥ २०
राज्यभ्रष्टेन दीनेन तापसेन गतायुषा ।
किं करिष्यसि रामेण मानुषेणाल्पतेजसा ॥ २१
भजस्व सीते मामेव भर्ताहं सदृशस्तव ।
यौवनं ह्यध्रुवं भीरु रमस्वेह मया सह ॥ २२

—For 14–15, Ñ2 V1 (l. 1–8 only) B1.3.4 D5.7 subst.; Ś1 D1–3 ins. l. 5 after $15^{ab}$ and l. 11 after $15^{cd}$; whereas D4 M3 ins. l. 5 after 14 :

1056* शृणु मैथिलि वाक्यं मे यत्त्वां वक्ष्यामि भाविनि ।
प्रमाणं कथयिष्यामि राक्षसानां तवाबले ।
त्रिंशत्कोटिसहस्राणि द्वात्रिंशद्रक्षसां तथा ।
द्विस्तावच्च पिशाचानां येषामहमिहेश्वरः ।
तेषामपि च शूराणां संग्रामेष्वनिवर्तिनाम् । [5]
एकैकस्य पृथक्संख्ये सहस्रमनुयायिनाम् ।
लङ्कायां विषयान्तेषु राक्षसा घोरविक्रमाः ।
देवदत्तवराः सर्वे समरेष्वनिवर्तिनः ।
तेषां शतसहस्राणि द्वे च त्रीणि च पञ्च च ।
एकैकस्य विशालाक्षि सप्त चत्वारि पृष्ठतः । [10]
एतन्मे सुमहत्सैन्यमक्षयं रिपुनाशनम् ।
($14^{cd}$) वर्जयित्वा जरावृद्धान्बालांश्च रजनीचरान् ।
ऋद्धस्फीतजनपदा लङ्केयं नगरी शुभा ।
कोषश्च विपुलो भद्रे रत्नानि च सहस्रशः ।

[ (l. 1) B1 यथा (for यत्त्वां). —(l. 2) G(ed.) वरानने (for तवाबले). —(l. 3) V1 राक्षसास् (for रक्षसां). —(l. 4) B4 विस्तारश्च (for द्विस्तावच्च). —(l. 5) D2 reads च in marg. Ś1 D1.2 सर्वेषाम् (for संग्रामेषु). —(l. 6) V1 सहस्रान्वययायिनां (for the post. half). —(l. 7) B3 G(ed.) लंकायां. V1 भीम-; B1 योध- (for घोर-). —(l. 8) B4 lacuna for सर्वे. Ñ2 B1 D5.7 संग्रामेषु (for समरेषु). V1 [अ]नुवर्तिनः (for [अ]निव°). —(l. 9) B4 येषां (for तेषां). —(l. 11) D3 एवं (for एतन्). D1 एवमेतन्महासैन्यम् (for the prior half). —(l. 12) B3 युवावृद्धान् (sic) (for जरा°). —(l. 13) B1 ऋ नु स्फीत-; B4 ऋद्धा स्फीता; D5 ऋद्धया स्फीत-; D7 ऋद्धया स्फीता. B3 तदा (for शुभा). —(l. 14) Ñ2 D5.7 वि(D5 om. [hapl.])विधानि च (for च सहस्रशः). ]

16 $^{a}$) Ś1 Ñ V1 B1.3.4 D1–3.5.7 M2 तदिदं; T2 यदीह. Ñ2 D5.7 राज्यमेतन्; Dg1 D3 T G1 M2 Cv.r.m.g.k राजतंत्रं; D1 °तत्त्वं; G(ed.) राष्ट्र°; Ct as in text (for राज्यतन्त्रं). Ś1 D1.2 हि; Dg1 T3 तु (for मे). —$^{b}$) Ś1 D1.2 त्वयि संप्रति तिष्ठति; D3 स्वयं त्वयि प्रतिष्ठितं. —$^{c}$) Dg1 T3 मे (for च). Dt1 D4.6 G1 विशालाक्षी. —$^{d}$) B1 हि; Dg1 marg. (for मे). G3 प्राणात्. Ñ1 ममाधानं तवैव हि.

17 $^{a}$) Ñ V1 B1.3.4 D5.7 बहूनि स्त्रीसहस्राणि; Dg1 Dt1 Dm1 D6.8 T3 Ct बह्वी(Dm1 °हू)नामुत्तमस्त्रीणां. —$^{b}$) Ś1 Ñ1 D1.2 मम योयं; Ñ2 V1 B1.3.4 D5.7 मम यानि; D3 यो ममायं (for मम योऽसौ). —$^{c}$) Ś1 D1.2 तस्य; Ñ2 V1 B3.4 D5.7 ते(B4 ए)षां; Cv.r.m.g.t as in text (for तासां). M3 Cm.g.k ईश्वरा (for °री). —After $17^{c}$, G3 reads $15^{b}$. —$^{d}$) Ñ1 शुभे भव (for भव प्रिये). Ñ2 V1 B1.3.4 D5.7 मम चैव भवेश्वरी(V1 °रा). ❀ Ck : ईश्वरा भवेति । पुंयोगाभावाट्टाबेव । पांक्तः पाठश्चाबन्तः. ❀ —After 17, D8 ins. रामसीताश्री.

18 $^{a}$) Ś1 D4 तया; B1 D1 [ऽ]नया; B4 [ऽ]ल्पया; Dg1 Dt1 Dm1 D6.8 T3 G3 M1 [ऽ]न्यथा (for ऽन्यया). —$^{b}$) G3 भार्या भव मम प्रिया. —$^{c}$) D4 om.; G3 मे (for मा). Ś1 Ñ V1 B1.3.4 Dg1 D1.2.5.7 T3 भद्रे(Ś1 °द्रं; Dg1 T3 Cm °ज) काम-; D3 मम काम-; Cm also as in text (for भजस्व मा). —$^{d}$) Ś1 D1–3 कुरु(Ś1 मम) याचतः; Ñ2 V1 B1.3.4 D5.7 कुरु जानकि (for कर्तुमर्हसि).

19 $^{a}$) Cg सहस्रेण (for समुद्रेण). —$^{b}$) Ñ2 V1 B1.3 D5.7 लंका वै. —$^{d}$) Dg1 reads from रपि up to रैः in marg. V1 सुरर्षभैः (for सुरासुरैः).

20 $^{a}$) Ś1 यज्ञेषु (sic) (for यक्षेषु). —$^{b}$) Cg पक्षिषु (for नर्षिषु). Ś1 D1.2 न गंधर्वमहर्षिषु; Ñ1 B1.3 न गंधर्वपतत्रिषु; Ñ2 B4 D5.7 G3 M2 गंधर्वेषु न च(M2 नर)र्षिषु; V1 न गंधर्वे न चर्षिषु; Dm1 D8 T2 गंधर्वेपूरगे(T2 °पु नरे)पु च; D4 गंधर्वेषु पतत्रिषु; G2 नासुरेषु न चर्षिषु; M1 गंधर्वेषु न नृष्वपि. —$^{c}$) Ñ1 न तं; D4 नाहं (for अहं). Ś1 D1–3 पश्यामि तमहं भद्रे; Ñ2 V1 B1.3.4 D5.7 M3 न(Ñ2 D5.7 तं) वै(B1 M3 तं)पश्याम्यहं लोके. —$^{d}$) B4 को (for यो). Ś1 भद्रे समो; D1.2.5.7 Cg वीर्ये समो; M3 वीर्यात्समो; G(ed.) प्रतिबलो (for वीर्यसमो).

21 $^{a}$) D3 भ्रष्टराज्येन. —$^{b}$) D3 मानुषेण (for तापसेन). Ñ1 दुरात्मना; Dt1 D6 पदातिना (for गतायुषा). —$^{c}$) B1.3 (before corr. as in text) Dt1 D1 करिष्यति; B4 करिष्यामि. —$^{d}$) M2 मनुष्येण. Ś1 D1–3 पदातिना; Ñ1 गतायुषा; B4 D4 G1.2 [अ]ल्पचेतसा (for [अ]ल्पतेजसा).

22 G1.2 M1.2 om. $22^{ab}$. —$^{a}$) D4 गच्छस्व (for

दर्शने मा कृथा बुद्धिं राघवस्य वरानने ।
कास्य शक्तिरिहागन्तुमपि सीते मनोरथैः ॥ २३
न शक्यो वायुराकाशे पाशैर्बद्धुं महाजवः ।
दीप्यमानस्य वाप्यग्नेर्ग्रहीतुं विमलां शिखाम् ॥ २४
त्रयाणामपि लोकानां न तं पश्यामि शोभने ।
विक्रमेण नयेद्यस्त्वां मद्बाहुपरिपालिताम् ॥ २५
लङ्कायां सुमहद्राज्यमिदं त्वमनुपालय ।
अभिषेकोदकक्लिन्ना तुष्टा च रमयस्व माम् ॥ २६
दुष्कृतं यत्पुरा कर्म वनवासेन तद्गतम् ।
यश्च ते सुकृतो धर्मस्तस्येह फलमाप्नुहि ॥ २७
इह सर्वाणि माल्यानि दिव्यगन्धानि मैथिलि ।
भूषणानि च मुख्यानि तानि सेव मया सह ॥ २८
पुष्पकं नाम सुश्रोणि भ्रातुर्वैश्रवणस्य मे ।
विमानं सूर्यसंकाशं तरसा निर्जितं मया ॥ २९
विशालं रमणीयं च तद्विमानं मनोजवम् ।
तत्र सीते मया सार्धं विहरस्व यथासुखम् ॥ ३०
वदनं पद्मसंकाशं विमलं चारुदर्शनम् ।
शोकार्तं तु वरारोहे न भ्राजति वरानने ॥ ३१

G. 3. 61. 43
B. 3. 55. 32
L. 3. 61. 32

भज° ). Ś1 D1–3 मां हि( D3 च ) त्वं ( for मामेव ). Ñ V1 B1.3.4 D5.7 मामेव( Ñ1 मम त्वं ) भज भद्रं ते. —$^{b}$ ) V1 भर्तारं ( for °हं ). V1 B3 T3 G3 सदृशं ( for °शस् ). Ś1 D2 भर्तारं सहसा प्रिये; Ñ B1 D1.3.5.7 M3 भर्तारं सदृशं तव( D1 प्रिये; D3 पतिं ). —$^{cd}$ ) Ñ1 Dt1 D6 G1 तु ( for हि ). Ñ1 भद्रे ( for भीरु ). Ñ1 क्रीड तस्मान्; D3 रमस्वैवं ( for रमस्वेह ). Ñ2 V1 B1.3.4 D5.7 अध्रुवं यौवनं भीरु रम तस्मान् ( V1 त्वं मां [ sic ] ) मया सह.

23 $^{ab}$ ) D3 दर्शने या कृता बुद्धी ( for $^{a}$ ). Ñ2 V1 B1.3.4 D5.7 रामसंदर्शनकृ( G[ ed. ]°यु )तां सीते बुद्धिं निवर्तय. —$^{c}$ ) Ś1 Ñ V1 B1.3.4 Dg1 D1–3.5.7 T2 कस्य ( for कास्य ). —$^{d}$ ) D1 अग्रि; D4 मम ( for अपि ). Ñ2 V1 B1.3.4 D5.7 स्वप्न- ( for सीते ). Ñ1 मत्समीपं शुभानने.

24 $^{a}$ ) B1 शक्तो ( for शक्यो ). Ś1 न शक्यं वायुमाकाशे. —$^{b}$ ) D2 पाश्वैर् ( for पाशैर् ). G( ed. ) बंद्धुं. Ś1 Ñ2 V1 B1.3.4 D1.2.5.7 T2 मनोजवः( Ś1 °वं ); Ñ1 महाबलः ( for महाजवः ). —$^{c}$ ) Ś1 Dm1 D1–3 G3 चाप्यग्नेर्; Ñ2 V1 B1.3.4 D5.7 वा वह्नेर्; D4.8 वा( D8 चा )स्यग्नेर् ( sic ) ( for वाप्यग्नेर् ). D6 दीप्यमानमिवाप्यग्नेर्. —$^{d}$ ) Ñ1 विपुलार्चिषं; Dg1 Dt1 D6 T2.3 M2 विमलाः शिखाः; Cg विमलां शिखां( as in text ).

25 $^{ab}$ ) Ñ1 न तं त्रिष्वपि लोकेषु पश्यामि वरवर्णिनि; Ñ2 V1 B1.3.4 D5.7 न तं( V1 तु ) पश्यामि पुरुषं त्रिषु लोकेषु मैथिलि. —Ñ2 reads 25$^{c}$–27$^{a}$ in marg. —$^{c}$ ) Dg1 T3 हरेद्यस्त्वां; G2 न योद्धयस्त्वां ( sic ) ( for नयेद्य° ). B3 नयेद्यस्त्वां महाबाहुर्. —$^{d}$ ) B3 विक्रमैः ( for मद्बाहु- ). Ś1 Ñ2 V1 D1.2.5.7 G3 M1 -बल- ( for -परि- ). Ś1 D1–3 M1 -रक्षितां.

26 Ñ2 reads 26 in marg. ( cf. v.l. 25 ). —$^{a}$ ) Ś1 Ñ1 V1 B3 Dt1 D6 लंकायाः. Ñ1 मम यद्; T2 सुमहा- ( for सुमहद् ). —$^{b}$ ) Ñ2 V1 B1.3.4 D5.7 इदं प्राप्य सुदुर्लभं. —After 26$^{ab}$, Dg1 Dt1 Dm1 D4.6.8 T G1.3 ( marg. ) ins. :

1057* त्वत्प्रेष्या मद्विधाश्चैव देवाश्चापि सुरासुराः ।

[ G3 mostly damaged. D4 मत्- ( for त्वत्- ). G1 राक्षसाश्च ( for देवाश्चापि ). Dt1 D6 T1 चराचरं( T1 Ck °राः ) ( for सुरासुराः ). ]

—Dg1 om. 26$^{cd}$. —$^{c}$ ) D4.6 T3 G1 M3 -जल-; Cr.g.t as in text ( for -[ उ ]दक- ). Ñ1 पीत्वा ( sic ); D6 -[ आ ]क्लिन्ना ( for -क्लिन्ना ). Dt1 अभिषेके जलक्लिन्ना. —$^{d}$ ) Dt1 D6 च ( for माम् ). Ś1 Ñ2 B1.3.4 D1–3.5.7 हृ( D3 तु )ष्टा रम( Ñ2 चर; D2 रामे ) मया सह; Ñ1 हृष्टा च ** सुंदरि ( illeg. ).

27 Ñ2 reads 27$^{a}$ in marg. ( cf. v.l. 25 ). B3 reads 27–28 in marg. —$^{a}$ ) D3 त्वया ( for पुरा ). —$^{b}$ ) D1 वनवासे त्वया कृतं. —$^{c}$ ) T1 स्वकृतो ( for सु° ). Ś1 Ñ V B1.3.4 Dt1 Dm1 D1–3.5–8 यच्च( B3 तच्च; D5 यत्तु ) ते सुकृतं कर्म( B3 भद्रे ). —$^{d}$ ) Ñ2 V1 B1.3.4 D2.5.7 तस्येदं; T2 तस्ये*. Ś1 स्वकृतं फलमाप्स्यसि.

28 B3 reads 28 in marg. ( cf. v.l. 27 ). Ś1 om. 28. —$^{a}$ ) B1 रम्याणि ( for माल्यानि ). Dg1 T2.3 M1 माल्यानि सर्वाणि ( by transp. ). Ñ1 इमानि सर्वमाल्यानि; V1 इह सर्वाणि सर्वाणि ( sic ). —$^{b}$ ) Ñ1 -गंधाश्च ( for -गन्धानि ). —$^{c}$ ) Ñ D3.5.7 च दिव्यानि; D1 च सर्वाणि; D4 च वस्त्राणि; G2 विचित्राणि ( for च मुख्यानि ). —$^{d}$ ) Ñ2 B1.3.4 D5.7 निषेवस्व; Dg1 reads तानि in marg.; T1.2 सेवस्व च ( for तानि सेव ). Ñ1 तानि सेवस्व शोभने; D1 तानि सेवय मे सह ( sic ).

29 $^{a}$ ) Ñ1 भद्रं ते ( for सुश्रोणि ). —$^{d}$ ) M3 निर्मितं ( sic ) ( for निर्जितं ). Dt1 D6 रणे ( for मया ).

30 Ś1 D4 G1.2 M om. 30$^{ab}$. G3 reads 30$^{ab}$ in marg. —$^{a}$ ) G3 damaged for च. Ñ1 रमणीयं विशालं च. —$^{b}$ ) B1 मान्वं तद्वि ( sic ); G3 ***नं ( damaged ) ( for तद्विमानं ). D1–3 मनोरमं; K( ed. ) अनुत्तमं ( for मनोजवम् ). —$^{c}$ ) B3( before corr. as in text ) G2 अत्र ( for तत्र ). M3 damaged for मया.

31 Ñ1 om. 31–34$^{b}$. Ś1 om. 31–33$^{b}$. —$^{ab}$ ) Ñ2 V1 B1.3.4 D1–3.5.7 T1 अमलं( D1 °ले ) and वदनं ( for वदनं

G. 3 61. 46
B. 3. 55. 34
L. 3. 61. 33

अलं व्रीडेन वैदेहि धर्मलोपकृतेन ते ।
आर्षोऽयं दैवनिष्यन्दो यस्त्वामभिगमिष्यति ॥ ३२
एतौ पादौ मया स्निग्धौ शिरोभिः परिपीडितौ ।
प्रसादं कुरु मे क्षिप्रं वश्यो दासोऽहमस्मि ते ॥ ३३
नेमाः शून्या मया वाचः शुष्यमाणेन भाषिताः ।
न चापि रावणः कांचिन्मूर्ध्ना स्त्रीं प्रणमेत ह ॥ ३४
एवमुक्त्वा दशग्रीवो मैथिलीं जनकात्मजाम् ।
कृतान्तवशमापन्नो ममेयमिति मन्यते ॥ ३५

इति श्रीरामायणे अरण्यकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

and विमलं respy.). —[c]) Ñ2 V1 B1.3.4 D1–3.5.7 शोकार्तं तव रंभोरु. —[d]) Ñ2 V1 B1.3.4 D3.5.7 भ्रा(B1 रा)जते न (for न भ्राजति). —After 31, Ñ2 V1 B1.3.4 D5.7 ins. :

1058* इत्युक्ताया मुखं तस्याः पूर्णचन्द्रसमप्रभम् ।
दग्धं विरूपतां यातं तद्वाक्यदववह्निना ।
रावणं चैव पश्यन्त्या अपश्यन्त्याश्च राघवम् ।
तस्याः क्रोधसमुत्थेन देहोऽदह्यत वह्निना ।
तस्या विवर्णतां दृष्ट्वा रावणो लोकरावणः । [5]
अब्रवीद्वचनं तत्र सान्त्वयंस्तां नृपात्मजाम् ।

[(l. 2) Ñ2 D7 दिग्धं; B4 जग्धं. V1 वैरूप्यतां (for विरूपतां). V1 -वर-; B1(before corr. as above) -दाव- (for -दव-). —G(ed.) om. l. 3–4. —(l. 3) Ñ2 D5.7 न पश्यंत्याश्च (for अप°). —(l. 4) B1 दह्यति (for ऽदह्यत). —(l. 6) V1 भूयः (for तत्र).];

while Dg1 Dt1 Dm1 D4.6.8 S ins. :

1059* एवं वदति तस्मिन्सा वस्त्रान्तेन वराङ्गना ।
पिधायेन्दुनिभं सीता मन्दमश्रूण्यवर्तयत् ।
ध्यायन्तीं तामिवास्वस्थां दीनां चिन्ताहतप्रभाम् ।
उवाच वचनं वीरो रावणो रजनीचरः ।

[(l. 1) G2 M1 तु (for सा). Dg1 T1 वक्त्रं हस्ते (for वस्त्रान्तेन). D4 G2 वक्त्रं हस्तेन चांगना; T2 वस्त्रं वक्त्रे वरानना (for the post. half). —(l. 2) T1 निधाय. G3 M3 -मुखं (for -निभं). Dg1 Dm1 D8 T1.3 G1 M1.2 Ct मुखम् (for मन्दम्). —(l. 3) T2 इह (for इव). Dt1 D6 सीतां; Dm1 D8 G3 दीन- (for दीनां). Dm1 G3 -चित्तां (for चिन्ता-). —(l. 4) Dm1 D8 G3 सीतां; D4 T1 G1 पापो (for वीरो). T1.3 M1 राक्षसेश्वरः; G2 लोकरावणः (for रजनीचरः).]

32 Ś1 Ñ1 om. 32 (cf. v.l. 31). —[a]) Ñ2 V1 B4 D1.2.5.7 श्रमेण; B3 व्रतेन; Dt1 क्रीडेन (sic) (for व्रीडेन). D1.2 ते भीरु; D3 सुभगे (for वैदेहि). —[b]) Ñ2 V1 B4 D2.5.7 ध(V1 क)मैरूप-; B1.3 धर्मताप-; D3 °लोभ-; D4 धर्मक*- (for धर्मलोप-). V1 D2 वै; B3 T1 च; Dt1 marg.; D3 मे (for ते). D1 धर्मेण सुकृतेन वै. —[c]) D2.3 आर्यो; T2.3 हर्षो (for आर्षो). Dg1 D3 दैवनिष्पन्नो; Dt1 D1.2.4.6.8 G1.2 M Cr.k.t देवि(D8 G1.2 Cr °व) निष्पं (G1 M Cr.k °प्यं)दो; G3 दे**ष्पंदो (damaged); Cv.m.g as in text (for दैवनिष्यन्दो). Ñ2 V1 B3 D5.7 हर्षोयं देवि विस्प(D7 °स्पृ)ष्टो(V1 °स्पंदो); B1 हर्षोयं देवि निष्पन्नो; B4 हर्षोयं देवि विस्यंदो. —[d]) Ñ2 V1 B1.3.4 D5.7 उप-; T3 अधि- (for अभि-). Dt1 D6 M3 Ck -भविष्यति; G2 -वतिष्यति (sic) (for -गमिष्यति). D1.2 यन्मामभिगमिष्यसि. ❀ Ck : देवि निष्यन्द इति पांक्तः। हे देवि त्वामभि उद्दिश्य मया क्रियमाणो यो निष्यन्दः स्नेहसंबन्धोऽस्ति सोऽयमार्षो भविष्यति ऋषिदिष्ट एव भविष्यति. ❀

33 Ñ1 om. 33; Ś1 om. 33[ab] (for both, cf. v.l. 31). —[a]) B1.3 तुभ्यं (for स्निग्धौ). —[b]) Ñ2 V1 B1.3.4 D5.7 अभि(B1.3 °व)पीडितौ; D1.2 पीडितौ तव (for परिपीडितौ). D3 हस्ताभ्यां तव पीडितौ. —[c]) D2 marg.; T2 L(ed.) क्षिप्र- (for क्षिप्रं). —[d]) V1 B1 Dg1 D4 T3 पश्य दासो; D3 दासो वश्यो (by transp.) (for वश्यो दासो).

34 Ś1 Ñ1 om. 34[ab] (for Ñ1, cf. v.l. 31). —[a]) V1 B1 धर्म-; Dg1 Dt1 D6 T M2.3 Cm.g.k.t इमाः (for नेमाः). Ñ2 B3 शून्य-; D2.3 शून्ये (for शून्या). G(ed.) कृथा (for मया). —[b]) D1 शुष्कवक्त्रेण भाषिताः. —[c]) Ñ2 V1 B1.3.4 D5.7 याचेन्; D1 काश्चिन् (for कांचिन्). —[d]) Ś1 D1.2 प्रणमेदिह; D3 M3 प्रणमेत च (for प्रणमेत ह). Ñ1 स्त्रियं मूर्ध्ना नमेत वै; Ñ2 V1 B1.3.4 D5.7 मूर्ध्ना कां(B1 किं)चिदपि स्त्रियं.

35 [b]) B4 वैदेहीं (for मैथिलीं). —[c]) Ñ1 illeg. for कृतांतव. —[d]) Ś1 मन्यत; L(ed.) [अ]मन्यत (for मन्यते). —After 35, Ś1 D1–3 ins. :

1060* सान्त्वयित्वा बहुविधं रावणो विरराम ह ।

[D3 याचयित्वा. Ś1 सांत्वयिष्यंश्च तां सीतां (for the prior half).]

—D1 cont. :

1061* तस्या वाक्यं पुनश्चान्ताच्छ्रुणोतीति प्रयत्नतः ।;

whereas Ñ2 B1.3.4 D5.7 ins. after 35 :

1062* इतीव सीता बहुसान्त्व्यमाना
शोकालसा वै मदनालसेन ।
भर्तृव्रता नैव वशं जगाम
दुःखाच्च भीरुर्भयमुत्ससर्ज ।

# ५४

सा तथोक्ता तु वैदेही निर्भया शोककर्षिता ।
तृणमन्तरतः कृत्वा रावणं प्रत्यभाषत ॥ १
राजा दशरथो नाम धर्मसेतुरिवाचलः ।
सत्यसन्धः परिज्ञातो यस्य पुत्रः स राघवः ॥ २
रामो नाम स धर्मात्मा त्रिषु लोकेषु विश्रुतः ।
दीर्घबाहुर्विशालाक्षो दैवतं स पतिर्मम ॥ ३
इक्ष्वाकूणां कुले जातः सिंहस्कन्धो महाद्युतिः ।
लक्ष्मणेन सह भ्रात्रा यस्ते प्राणान्हरिष्यति ॥ ४
प्रत्यक्षं यद्यहं तस्य त्वया स्यां धर्षिता बलात् ।
शयिता त्वं हतः संख्ये जनस्थाने यथा खरः ॥ ५
य एते राक्षसाः प्रोक्ता घोररूपा महाबलाः ।
राघवे निर्विषाः सर्वे सुपर्णे पन्नगा यथा ॥ ६
तस्य ज्याविप्रमुक्तास्ते शराः काञ्चनभूषणाः ।
शरीरं विधमिष्यन्ति गङ्गाकूलमिवोर्मयः ॥ ७

G. 3. 62. 7
B. 3. 56. 7
L. 3. 62. 7

[ (l. 1) D7 मुहुः (for बहु-). B3 -**माना; D5.7 -सांत्वमाना. —(l. 2) B1 भयमानसेन; B3 मदनानलेन (for मदनालसेन). —(l. 3) B3.4 नोपवशं; D5 नैव शमं (for नैव वशं). D5 जगाद (for °गाम). B1 भर्तृव्रतान्नोपरमं जगाम. —(l. 4) B1 आससर्ज.] —B3 cont. :

1063* दशमुखो मिथिलाधिपतेः सुतां
सुबहुशः शिरसाभिनिपत्य वै ।
मदनबाणहतो न निवेद तां
ह्यतनु नाद्यकरमुदितां रुजम् (sic) ।

Colophon.—*Sarga name* : Ś1 V1 B1.3.4 D3 सीतानुनयः (V1 °यं); Ñ1 D1.2 रावणवाक्यं; Ñ2 D5.7 सीतानुतापः. —*Sarga no.* (figures, words or both) : Ś1 Ñ1 B1.3 D2 om.; Ñ2 V1 D5.7 61; B4 D3 62; Dg1 Dt1 Dm1 D6.8 T G M1.2 55; D1.4 58; M3 56.—After colophon, G1.2 conclude with श्रीरामाय नमः.

## 54

☞ V2 illeg. for Sarga 54 (cf. v.l. 3.53). D8 begins with ॐ; T2 with श्रीरामचन्द्राय नमः; M1 with श्रीरामाय नमः.

1 [a]) M3 एवमुक्ता (for सा तथोक्ता). D6 च (for तु). —[b]) M3 भयार्ता (for निर्भया). Ś1 D1–6 T1.2 G M शोककर्शिता; Dg1 T3 शोकपीडिता (for °कर्षिता).—[c]) Ñ1 D3 अंतरितं (for अन्तरतः). D1 तृणमात्रमतः कृत्वा. —[d]) Ś1 V1 B1.3.4 D5.7 वाक्यमब्रवीत् (for प्रत्यभाषत).

2 [b]) Dg1 T3 सत्यसेतुर् (for धर्म°). Ś1 D1.2 इवापरः (for °चलः). ❀ Ck : धर्मसेतुरिवेत्येकं पदम्। इवेन विभक्त्यलोपः समासश्चेति। धर्मसेतुर्मर्यादावस्थितिहेतुः धर्मसेतुरिव मर्यादाप्रतिष्ठापक इत्यर्थः।; Ct : धर्मसेतुरिवेत्यत्र धर्मेति पृथक्पदं लुप्तषष्ठीकम्। धर्मस्याचलः सेतुरिव मर्यादाप्रतिष्ठापकः. ❀ —[c]) Ś1 सत्यबंधः; D7 सेतुबंधः (for सत्यसन्धः). Ñ1 परित्राताः; Ñ2 V1 B1.4 D5.7 °ख्यातो; D2 G2.3 M1.2 प्रतिज्ञातो; Cr.g.k.t as in text (for परिज्ञातो). B3 (before corr. as in text) सत्यसंधमविज्ञातो. —[d]) Ñ1 तस्य (for यस्य). D3 om. स (subm.).

3 [a]) B3 M1 सु (B3 before corr. as in text) धर्मात्मा; D3 धर्मात्मा (subm.) (for स धर्मात्मा). —[d]) T1 हि (for स). G(ed.) सत्पतिर् (for स पतिर्). D4 T2 परमं महत् (T2 °म) (for स पतिर्मम). Ñ1 मम ** महायशाः.

4 [a]) Ñ1 इक्ष्वाकोस्तु (for इक्ष्वाकूणां).—[b]) M3 सिंहोरस्को (for सिंहस्कन्धो). Ś1 Ñ V1 B1.3.4 D1–3.5.7 महाबलः (V1 D3 °भुजः) (for महाद्युतिः).—[d]) Ñ B1.4 D5.7 स ते; V1 स तेन (hypm.) (for यस्ते). B4 हनि (marg. also as in text) ष्यति; Dt1 Dm1 D6.8 वधिष्यति (for हरि°).

5 [b]) Ś1 Dt1 D6 T3 त्वया वै (T3 सा) (for त्वया स्यां). G3 वने (for बलात्). Ñ2 V1 B1.3.4 D5.7 भवेयं वै हृता (Ñ2 V1 वैकृता) त्वया; M2 गृहीता स्यां त्वया बलात्; M3 या गृहीता त्वया बलात्.—[cd]) Ñ1 G3 शयीथास्त्वं; M3 शयितस्त्वं (sic) (for शयिता त्वं). Ś1 D1–3 शयिष्ठा (D1 °यीथा) स्त्वं (D3 शापितः स्याञ्) जनस्थाने हतः संख्ये यथा खरः (L[ed.] यथा संख्ये हतः खरः).—For 5[cd], Ñ2 V1 B1.3.4 D5.7 subst. :

1064* सुव्यक्तं त्वं सह प्राणैर्मुञ्चेथाश्चैव मां युधि ।

[B4 अव्यक्तं. Ñ2 D5.7 वै (for त्वं). V1 इह (for सह). B3.4 तु च (for चैव).]

6 [ab]) Ñ1 **** क्षसाः संति (illeg.); D3 यदि ते राक्षसास्त्राणं (for [a]). Ś1 D1.2 यानि ते परमास्त्राणि घोररूपाणि संति वै.—[c]) Ś1 D1.2 निर्विषाणि स्युः; Ñ1 D3 निर्विषास्ते स्युः (for निर्विषाः सर्वे).—After निर्विषाः, Dt1 erroneously reads संख्ये जनस्थाने यथा खरः.—[d]) G3 गरुडे (for सुपर्णे). M3 इव (for यथा). D3 सुपर्ण इव पन्नगाः.—For 6, Ñ2 V1 B1.3.4 D5.7 subst. :

1065* यानि ते राक्षसास्त्राणि घोराणि च बहूनि च ।
तानि ते निष्फलानि स्युः सुपर्णे पन्नगा इव ।

[(l. 1) B3.4 रावण (for राक्षस). V1 B1 सुबहूनि च. —(l. 2) G(ed.) रामेऽफलानि स्युः. B3.4 इव पन्नगाः (by transp.).]

7 [a]) D7 -युक्तास् (for मुक्तास्). B1 तु (for ते). Ś1 D1.2 तेन प्रतिविमुक्तास्ते.—[b]) Dg1 T3 कनकभूषिताः (T3

